एवार्थे । स एव देवेषु गच्छति । देवास्तमेव परिगृह्णन्ति नान्यमित्यर्थः ॥ ४ ॥

वेङ्कट० अग्ने ! यं यज्ञम् हिंसारहितमहिंसितं त्वत्सन्निधानादसुरैः, सर्वतः परिभवसि गार्हपत्यादिव्यूहेन अरानिव नेमिः स एव देवेषु गच्छति ॥ ४ ॥

मुद्गल० हे अग्ने ! त्वं यं[1] यज्ञं विश्वतः सर्वासु दिक्षु परिभूः परितः प्राप्तवान् असि । स इत् स एव यज्ञः देवेषु तृप्तिं जनयितुं स्वर्गे[2] गच्छति ॥ ४ ॥

अ॒ग्निर्होता॑ क॒विक्र॑तुः स॒त्यश्चि॒त्रश्र॑वस्तमः । दे॒वो दे॒वेभि॒रा ग॑मत् ॥ ५ ॥

अ॒ग्निः । होता॑ । क॒विऽक्र॑तुः । स॒त्यः । चि॒त्रश्र॑वःऽतमः । दे॒वः । दे॒वेभिः॑ । आ । ग॒म॒त् ॥५॥

स्कन्द० अग्निः होता देवानाम् । कविक्रतुः कविशब्दोऽत्र क्रान्तवचनः, [1]न मेधाविनाम । क्रतुशब्दः प्रज्ञानाम कर्मनाम वा, क्रान्तं गतं[3] सर्वत्राप्रतिहतं प्रज्ञानं कर्म वा यस्य स कविक्रतुः । सत्यः अविसंवादकः[4] यथाभिलषितफलद[5] इत्यर्थः । चित्रश्रवस्तमः चायृ पूजानिशामनयोः [6]इत्यस्य [चित्रमिति, रूपम्] । चित्रं[7] पूजनीयम् । [8]विचित्रपर्यायो वा चित्रशब्दः[8] । [9]श्रव इत्यन्ननाम वा, धननाम वा, कीर्तिपर्यायो वा[9] । अतिशयेन पूज्यं विचित्रं वा [10]अन्नादीनामन्यतमं[10] यस्य स चित्रश्रवस्तमः । देवः [11]दानादिगुण देवैभि सहयोगलक्षणा एषा तृतीया । देवैः सह आगमत्[11] आगच्छतु ॥ ५ ॥

वेङ्कट० अग्निः होता क्रान्तप्रज्ञः[11] सत्यकर्मा अतिशयेनाश्चर्यश्रवणः देवः देवैः सह आगच्छतु ॥ ५ ॥

मुद्गल० अयम् अग्निः देवः देवेभिः अन्यैर्देवैर्हविर्भोजिभिः सह आगमत् अस्मिन् यज्ञे समागच्छतु[12] कीदृशोऽग्निः । होता होमनिष्पादकः । कविक्रतुः क्रान्तप्रज्ञः । सत्यः अनृतरहितः फलमवश्यं प्रयच्छतीत्यर्थः । चित्रश्रवस्तमः श्रवः कीर्तिः । अतिशयेन विचित्रकीर्तियुक्तः ॥ ५ ॥

इति प्रथमाष्टके प्रथमाध्याये प्रथमो वर्गः ॥ १ ॥

यद॒ङ्ग दा॒शुषे॒ त्वमग्ने॑ भ॒द्रं क॑रि॒ष्यसि॑ । तवेत् तत् स॒त्यम॑ङ्गिरः ॥ ६ ॥

यत् । अ॒ङ्ग । दा॒शुषे॑ । त्वम् । अ॒ग्ने॒ । भ॒द्रम् । क॒रि॒ष्यसि॑ । तव॑ । इत् । तत् । स॒त्यम् । अ॒ङ्गि॒रः॒ ॥ ६ ॥

स्कन्द० [13]अङ्ग इति निपातोऽत्र पादपूरणः क्षिप्रार्थो वा सामर्थ्यात्[13] । यत्[14] क्षिप्रम् दाशुषे [15]दाश्वान् यजमानः । हविषां दातृत्वात् तस्मै[15] । त्वम् हे अग्ने ! भद्रम् भजनीयं स्तुत्यमुत्कृष्टम्[11] । इष्टमित्यर्थः[13] । किं पुनस्तत्, धनमन्नं वा । करिष्यसि [13]दाशुष इति सम्प्रदानचतुर्थीश्रुतेरिह करोतिः क्रियासामान्यवचनो दाने वर्तते[13] । दास्यसि इत्यर्थः । तव इत् तत् [13]इच्छब्द एवार्थे वर्तते[11] ।

१. नास्ति त्रि मै[1]. २. स्वर्ग मूको. ३-३. [illegible]. प्रज्ञाया कर्माणि वा वि[1] अ कु. ४. अभिल° वि[2] अ; अभिसम्पाद° साम्ब. ५. °स्पदः वि[1] अ कु. ६-६. नास्ति वि[1] अ कु. [-] नास्ति मूको. ७-७. विचित्रं वा चित्रम् वि[1] अ कु. ८-८. श्रः श्रव वा धन वा कीर्तिर्वा वि[1] अ कु; °न्ननाम वा कीर्ति° वि[2]. ९-९. अन्न धन यशश्च (यशो वा कु.) वि[1] अ कु. १०-१०. दाता दीप्तश्च । देवैः वि[1] अ कु. ११. क्रान्त° वि[1] ल. १२. °गच्छतु त्रि मै[1]. १३-१३. नास्ति वि[1] अ कु. १४. यदङ्ग कु; अङ्ग वि[1] अ. १५-१५. यजमानाय वि[1] [illegible] कु. १६. °ष्टं वा अ कु.

धिया यादृश्यस्माकं प्रज्ञा[1] तादृश्या वयं नमः स्तुतिं भरन्तः 'हृञ् हरणे इत्येतस्यैवैतद् रूपम्'[2]। 'हृग्रहोर्भश्छन्दसि' (पावा ८, २, ३२) इति हस्य भः[2]। हरन्तः प्रापयन्तः स्तुतिं कुर्वन्त इत्यर्थः। त्वा त्वाम् उप एमसि आङत्र धात्वर्थानुवादी। उपगच्छामः[3] ॥७॥

वेङ्कट० उपगच्छामः त्वाम् अग्ने! वयम् अन्वहं "सायञ्च प्रातश्च" अग्निहोत्रकर्मणा अन्नं[4] भरन्तः ॥७॥

मुद्गल० हे अग्ने! वयम् अनुष्ठातारः दिवेदिवे प्रतिदिनं दोषावस्तः रात्रावहनि च धिया बुद्ध्या नमः भरन्तः नमस्कारं संपादयन्तः उप समीपे त्वा एमसि त्वामागच्छामः ॥७॥

राज॑न्तमध्व॒राणां॑ गो॒पामृ॒तस्य॒ दीदि॑विम् । वर्ध॑मानं॒ स्वे दमे॑ ॥ ८ ॥

राज॑न्तम् । अ॒ध्व॒राणा॑म् । गो॒पाम् । ऋ॒तस्य॑ । दीदि॑विम् । वर्ध॑मानम् । स्वे । दमे॑ ॥ ८ ॥

स्कन्द० 'कीदृशं त्वाम्'। उच्यते। राजन्तम् राजतिरैश्वर्यकर्मा (द्र. निघ २,२१) ईशानम्। कस्य। अध्वराणाम् यज्ञानाम्। गोपाम् रक्षितारं च। कस्य। ऋतस्य यज्ञस्यैव। ऋतशब्दो ह्यपठितोऽपि भूयिष्ठं यज्ञनाम दृश्यते। दीदिविम् आत्यर्थं दीप्तम्। वर्धमानं स्वे आत्मीये दमे यज्ञगृहे। 'दमे' (निघ ३,४) इति गृहनाम। सामर्थ्यादत्र यज्ञगृहे वर्तते[5] ॥८॥

वेङ्कट० दीप्यमानं "यज्ञानां गोपायितारं सत्यस्य दीप्तं स्वे दमे आहवनीये समिध्यमानमुपेम।"[6] ॥८॥

मुद्गल० राजन्तम् दीप्यमानम् अध्वराणाम् यागानां गोपाम् रक्षकम् ऋतस्य सत्यस्य[7] अवश्यंभाविनः कर्मफलस्य दीदिविम् पौनःपुन्येन द्योतकं स्वे दमे स्वकीये गृहे यज्ञशालायां हविर्भिः वर्धमानम् ॥८॥

स नः॑ पि॒तेव॑ सू॒नवेऽग्ने॑ सूपाय॒नो भ॑व । सच॑स्वा नः स्व॒स्तये॑ ॥ ९ ॥

सः । न॒ः । पि॒ताऽइ॑व । सू॒नवे॑ । अग्ने॑ । सु॒ऽउ॒पा॒य॒नः । भ॒व॒ । सच॑स्व । न॒ः । स्व॒स्तये॑ ॥ ९ ॥

स्कन्द० 'सः' इति पूर्वप्रतिनिर्देशो वा तच्छब्दश्रुतिसामर्थ्यादेव वा योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः यं त्वामस्तोष्महि इति। स त्वं नः अस्माकं पितेव सूनवे 'सूनुः' (निघ २,२) इत्यपत्यनाम। षष्ठ्यर्थे चात्र चतुर्थी। यथा पिता पुत्रस्य, एवं हे अग्ने! सूपायनः सूपगमः सुखोपसर्पो भव। सचस्व सेवस्व च नः अस्मान् स्वस्तये 'स्वस्तीत्यविनाशनाम' (या ३,२१) अविनाशाय। रक्षितुमस्मानस्मत्समीपे नित्यं भवेत्यर्थः[8] ॥९॥

वेङ्कट० सः त्वम् अस्मभ्यं यथा पिता पुत्राय अग्ने! सूपचरः, एवं सूपचरो[10] भव। सेवस्व च अस्मान् अविनाशाय ॥९॥

मुद्गल० हे अग्ने! सः त्वं नः अस्मदर्थं सूपायनः शोभनप्राप्तियुक्तः भव। तथा नः अस्माकं स्वस्तये विनाशराहित्यार्थं सचस्व समवेतो भव। दृष्टान्तः—पितेव यथा सूनवे पुत्रार्थं पिता सुप्रापः प्रायेण समवेतो भवति, तद्वत् ॥९॥

इति प्रथमाष्टके प्रथमाध्याये द्वितीयो वर्गः ॥

१. 'सत्र॰' वि[1] अ कु. २-२. हृग्रहोर्भरछन्दसि वि[1] अ कु. [नास्ति मूको. ३. उपग॰ साम्ब. ४-४. सायं प्रा॰ साम्ब[1] कु. ५ नमः साम्ब कु. ६-६. राजन्त राजतिरैश्वर्यकर्मा ईशानम्। अध्वराणां रक्षितारम्। यज्ञस्य अत्यर्थं दीप्तम्। 'जागृस्तृजागृभ्य. क्विन्' (पाउ ४,५४), 'दिवो द्वे दीर्घश्चाभ्यासस्य' (पाउ ४,५५) इति दीदिविः। वर्धमानमात्मीये यज्ञगृहे वि[1] अ कु ७-७. नास्ति स्वे दमे आहवनीये समिध्यमानमुपेम। गोपायितारं सत्यस्य दीप्तम् वि[1] अ साम्ब. ८. नास्ति वि मे[1] ९-९. स त्वमस्माकं पितेव। यथा पिता पुत्रस्य सूपगमः एव नः त्वं सुखोपसर्पो भव। 'षच षच सेवायाम्' सेवस्वास्मान्। स्वस्तयेऽविनाशाय। रक्षितुमस्मानस्मत्समीपे नित्यं भव वि[1] अ कु. १०. सूपचा॰ साम्ब[1].

'जरिता' (निघ ३,१६) इति स्तोतृनाम। कीदृशाः। सुतसोमाः कृतसोमाभिषवाः। तुभ्यं यः प्रदास्यते सोमः स्तुताय, तमभिषुत्येत्यर्थः। अहर्विदः अहश्शब्दोऽत्राह्ना यः समाप्यते ज्योतिष्टोमादिः सोमयागः तस्य वाचकः, न दिवसस्य[1]। प्रक्रान्तस्य ज्योतिष्टोमादेरहःपरिमितस्य सोमयागस्य ज्ञातार इत्यर्थः ॥ २ ॥

वेङ्कट० वायो! त्वाम् प्रति शस्त्रैः स्तुवन्ति स्तोतारः अभिषुतसोमाः अहर्विदः[२] लब्धाहर्मुखाः ॥२॥

मुद्गल० हे वायो! जरितारः स्तोतारः ऋत्विग्यजमानाः त्वाम् अच्छ अभिलक्ष्य उक्थेभिः आज्यप्रउगादिभिः शस्त्रैः जरन्ते स्तुवन्ति। कीदृशाः। सुतसोमाः अभिषुतेन सोमेनोपेताः। अहर्विदः अहःशब्द एकेनाह्ना निष्पाद्ये अग्निष्टोमादिक्रतौ वैदिकव्यवहारेण प्रसिद्धः। क्रत्वभिज्ञा इत्यर्थः ॥२॥

वायो॒ तव॑ प्रपृञ्च॒ती धेना॑ जिगाति दा॒शुषे॑। उ॒रू॒ची सोम॑पीतये ॥ ३ ॥

वायो॒ इति॑। तव॑। प्र॒ऽपृ॒ञ्च॒ती। धेना॑। जि॒गा॒ति॒। दा॒शुषे॑। उ॒रू॒ची। सोम॑ऽपीतये ॥ ३ ॥

स्कन्द० हे वायो! तव अवयवभूता प्रपृञ्चती पृची सम्पर्के। सामर्थ्याच्च सोमसम्पर्के वर्तते, न च यत्र क्वचित्। सम्पर्केण चात्र स्वहेतुरभिलापो लक्ष्यते। अभिलापार्थ एव वा पृचतिः[1]। प्रकर्षेण सोममभिलषन्तीत्यर्थः। 'अथवा 'पपृक्षा', महयति' (निघ ३,१४) इत्यर्चतिकर्मसु पाठात् पृचतिः स्तुत्यर्थोऽपि। न सम्पर्कार्थ एवेति शक्यते। व्यत्ययेन वा शतृप्रत्ययः कर्मणि। प्रपृञ्चती प्रकर्षेण स्तूयमानेत्यर्थः। धेना जिह्वा। किं करोति। उच्यते। जिगाति गतिकर्मायं 'जिगाति' 'इन्वति' (निघ २,१४) इति गतिकर्मसु पाठात्। गच्छति। दाशुषे, 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ ०' (पा २, ३, १२) इत्येवमियं कर्मणि चतुर्थी[४]। 'दाश्वांसं यजमानं प्रतीत्यर्थः[४]। कीदृशी। 'उरूची उरुशब्दो बहुनाम (द्र. निघ ३,१)। अञ्चतिर्गत्यर्थः। बहून् यजमानान् प्रति गन्त्री। अवयवभूतजिह्वागमनेनात्रावयविनो वायोरेव गमनं लक्ष्यते। त्वं गच्छसीत्यर्थः। किमर्थम्। सोमपीतये सोमपानार्थम्[५] ॥ ३ ॥

वेङ्कट० वायो! धेनेन स्तोतॄन् प्रपृञ्चती संयोजयन्ती शतं युष्मभ्यं सहस्रं युष्मभ्यमित्येवं बहुगामिनी[६] तव वाक् दातारमुद्दिश्य सोमपानार्थं निष्क्रामति ॥ ३ ॥

मुद्गल० हे वायो! तव धेना वाक् सोमपीतये सोमपानार्थं दाशुषे दाश्वांसं दत्तवन्तं यजमानं जिगाति गच्छति। हे यजमान! त्वया दत्तं सोमं पास्यामीत्येवं वायुर्ब्रूते इत्यर्थः। कीदृशी धेना। प्रपृञ्चती प्रकर्षेण सोमसम्पर्कं कुर्वती सोमगुणं वर्णयन्तीत्यर्थः। उरूची उरून् बहून् यजमानान् गच्छन्ती। सोमयाजिनः सर्वान् वर्णयन्तीत्यर्थः ॥३॥

इन्द्र॑वायू इ॒मे सु॒ता उप॒ प्रयो॑भि॒रा ग॑तम्। इन्द॑वो वामु॒शन्ति॒ हि ॥ ४ ॥

इन्द्र॑वायू॒ इति॑। इ॒मे। सु॒ताः। उप॑। प्रयः॑ऽभिः। आ। ग॒त॒म्। इन्द॑वः। वा॒म्। उ॒शन्ति॑। हि ॥ ४ ॥

---

१-१. नास्ति वि[°] अ कु. २. नास्ति ल. ३. जिह्वा वि[°] अ कु. ४-४. गच्छति यजमानम्। पृची सम्पर्के स्तुतौ वा। सोमसम्पृक्ता। अथवा व्यत्ययात् कर्मणि शतृ (शता वि[°]; शत्रा अ) प्रत्ययः। प्रस्तूयमाना। धेना जिह्वा (जिह्वा ये[°] अ)। वाङ् गतौ गच्छति। दाश्वान् यजमानः। 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि' (पा २, ३, १२) इति द्वितीयार्थे चतुर्थी वि[°] अ कु. ५-५. धेना। उरूची बहून् प्रति गन्त्री। उरु बहु। अञ्चु गतौ। त्वं गच्छसीत्यर्थः। किमर्थं सोमपानाय वि[°] अ कु. ६. °बहुगामी सत्स्व[°].

वेङ्कट० वायो! त्वम् अयञ्च[1] इन्द्रो[2] दूरस्थावेव [3]सुतान् सोमान्[3] जानीथः । तौ[4] क्षिप्रम् उपागच्छतम् । अन्नेन वासयितारौ वाजिनीवसू इति ।

सुतसोमपरिज्ञानं [5]तदागमनकारणम् ।
नचोद्राजमिहारयातं वक्ष्यते तत्र कारणम् ॥
ऋचामभिहितार्थानां यथा पश्चाद् समन्वयः ।
हेतुत्वहेतुमद्भावौ तथैवाऽत्राऽपि सङ्गतौ ॥ इति ॥ ५ ॥

मुद्गल० चकारेणान्यः[6] समुच्चीयते । सन्निहितत्वाद्वायुरेव । हे वायो! त्वम् इन्द्रश्च [7]युवामुभौ सुतानाम् अभिषुतान् सोमान् चेतथः जानीथः । कीदृशौ युवाम् । वाजिनीवसू वाजोऽन्नं तद्वत्यां हविस्सन्ततावस्ति सा वाजिनी । तस्यां वसत इति वाजिनीवसू । तौ तथाविधौ युवां द्रवत् क्षिप्रम् उप समीपे आयातम् आगच्छतम् ॥५॥

इति प्रथमाष्टके प्रथमाध्याये तृतीयो वर्गः ॥

वायविन्द्रश्च सुन्वत आ यातमुप निष्कृतम् । मक्ष्वि१त्था धिया नरा ॥ ६ ॥
वायो इति । इन्द्रः । च । सुन्वतः । आ । यातम् । उप । निःऽकृतम् । मक्षु । इत्था ।
धिया । नरा ॥ ६ ॥

स्कन्द० [8]हे वायो! इन्द्रः च यस्मात् त्वं च । सुन्वतः सोममभिषुण्वतः यजमानस्य स्वभूतम् आ यातम् उप उपागच्छतम् । निष्कृतम् निरित्येष समित्येतस्य स्थाने । संस्कृतं वेद्याख्यं प्रदेशम् । मक्षु क्षिप्रम् । इत्थाशब्दोऽमुत इत्यस्यार्थे । अमुतोऽन्तरिक्षात् स्वस्मात् स्थानात् । 'धीः' (निघ २,१) इति कर्मनाम । हेतौ च तृतीया । प्रयोजनस्य च हेतुत्वेन विवक्षा । कर्मणा हेतुना । अस्मदीययागकर्म परिसमापयितुमित्यर्थः । नहि युवयोरनागतयोरेतत् परिसमाप्स्यते । अथवा 'इत्था' (निघ ३,१०) इति सत्यनाम[9] धियश्च विशेषणम् । सत्येन भवतोरविसंवादिना सर्वैरेव युष्मत्सम्बन्धेन कर्मणा हेतुनाऽस्मदीययागकर्म परिसमापयितुमित्यर्थः । हे नरा! [10]मनुष्यनामैतत् । देवानां च मनुष्यत्वासम्भवात् सर्वत्र तदाकारत्वान्मनुष्यनामभिर्व्यपदेशः । मनुष्याकारौ । यथा मनुष्यो हस्ताद्युपेतशरीरः, तद्वद्धस्ताद्युपेतशरीरावित्यर्थः[10] ॥६॥

वेङ्कट० वायो! इन्द्रः च सुन्वतः संस्कृतं[11] सोमम् उपागच्छतं शीघ्रम् । इत्थं क्रियमाणं कर्मोद्दिश्य नेतारौ ॥६॥

मुद्गल० हे वायो! त्वम् इन्द्रश्च सुन्वतः सोमाभिषवं कुर्वतो यजमानस्य निष्कृतम् संस्कर्तारं सोमम् उपायातम् आगच्छतम् । हे नरा! नरौ । पौरुषेण सामर्थ्येनोपेतौ । युवयोरागतयोश्च सतोः धिया अमुना कर्मणा मक्षु त्वरया संस्काराः सम्पत्स्यन्ते । इत्था सत्यम् ॥६॥

---

1. नास्ति कु साम्ब. 2. चन्द्रश्च साम्ब[3,4]; चन्द्रो साम्ब[1]; इन्द्रश्च कु. 3-3. सोमान् सु° साम्ब[1]. 4. नास्ति साम्ब[1]. 5. °न्तागम° वि[1] ल साम्ब[1]; नताग° साम्ब[3,4]. 6. °रेण नान्यः वि मेरे. 7. तौ यु° मूको. 8-8. हे इन्द्रवायू! यजमानस्य स्वभूतं संस्कृतं वेद्याख्यं प्रदेशमुपागच्छतम् । नि° समित्यर्थे । मक्षु क्षिप्रम् । इत्था अमुतः अन्तरिक्षात् । कर्मणा हेतुना । धीः कर्मणि । अस्मत्कर्मणः परिसमाप्तिः युष्मदागमनेनैव स्यात् वि[1] अ कु. 9. °नाम । नात्र इत्थाशब्दस्य पञ्चमी वि[1] अ कु. 10-10. नरावेतौ वि[1] अ कु. 11. संस्कृतं सोम° साम्ब[1]; संस्कृतान् सुपं.

वेङ्कट० सत्येनैव मित्रावरुणौ ! सत्यस्य वर्धयितारौ ! सत्यस्य स्प्रष्टारौ ! यज्ञं महान्तम् आनशाथे[1] ॥८॥

मुद्गल० हे मित्रावरुणौ ! युवाम् क्रतुम् प्रवर्तमानमिमं सोमयागम् आशाथे आनशाथे व्याप्तवन्तौ । केन निमित्तेन । ऋतेन अवश्यंभाविफलया सत्येन फलेन । अस्मभ्यं फलं दातुमित्यर्थः । कीदृशौ युवाम् । ऋतावृधौ 'ऋतमित्युदकनाम' (या २,२५) । उदकस्य वर्धयितारौ । अत एव च[2] ऋतस्पृशा उदकं स्पृशन्तौ । कीदृशं क्रतुम् । बृहन्तम् अतिशयेन प्रौढम् ॥८॥

क॒वी नो॑ मि॒त्रावरु॑णा तुविजा॒ता उ॑रु॒क्षया॑ । दक्षं॑ दधाते अ॒पस॑म् ॥ ९ ॥

क॒वी इति॑ । नः॒ । मि॒त्रावरु॑णा । तु॒वि॒ऽजा॒तौ । उ॒रु॒ऽक्षया॑ । दक्ष॑म् । द॒धा॒ते॒ इति॑ । अ॒पस॑म् ॥९॥

स्कन्द० 'कवी मेधाविनौ नः तादर्थ्ये एषा चतुर्थी । अस्माकमर्थम् । मित्रावरुणा द्विवचनस्यायमाकारः मित्रावरुणौ । तुविजातौ 'तुवि' (निघ ३,१) इति बहुनाम । बहुनामसमर्थाय जातौ तुविजातौ । सर्वेषां प्राणिनामुपकर्तुमुत्पन्नावित्यर्थः । अनन्तं जातं जन्मोच्यते । बहूनि जन्मानि ययोस्तौ तुविजातौ । यथानयोः कर्मात्मना पुनःपुनर्जन्म तदपेक्षया जन्मबहुत्वम् । उरुक्षया 'उरु' (निघ ३,१) इति बहुनाम विस्तीर्णपर्यायो वा । बहुनिवासौ विस्तीर्णनिवासौ वा । 'दक्षम् बलं सेनालक्षणम् । दधाते धारयतः अपसं कर्म च । 'अपः' (निघ २, १) इति हि कर्मनाम । अस्मदर्थं स्वसेनां पुष्णीतः, तथा च युद्धादिकर्म कुरुतः । अथवा न इति सम्प्रदाने चतुर्थी । दधातिरपि दानार्थः । अस्मभ्यं बलं यागादि-कर्म च दत्त इत्यर्थः[3] ॥९॥

वेङ्कट० क्रान्तदर्शिनौ[4] मित्रावरुणौ अस्मभ्यम् अहोरात्रयोः प्रादुर्भावादनेकजन्मानौ बहुनिवासावनेकयज्ञौ वा[5] बलं प्रयच्छतः येन च ।

'प्रजगृषाणां मध्ये पुनश्छेदो दक्षं दधाते अपसमित्यभिमताशंसनादित्याहुः । अर्थमिच्छन्तो हि सूक्तैः स्तुवन्ति देवता इति'[6] ॥९॥

मुद्गल० मित्रावरुणाख्यौ देवौ नः अस्माकं दक्षम् बलम् अपसम् कर्म च दधाते पोषयतः । कीदृशौ । कवी मेधाविनौ । तुविजाती बहूनामुपकारकतया[7] समुत्पन्नौ । उरुक्षया बहुनिवासौ ॥९॥

इति प्रथमाष्टके प्रथमाध्याये चतुर्थो वर्गः ॥

[ ३ ]

अश्वि॑ना॒ यज्व॑री॒रिषो॒ द्रव॑त्पाणी॒ शुभ॑स्पती । पुरु॑भुजा चन॒स्यत॑म् ॥ १ ॥

अश्वि॑ना । यज्व॑रीः । इषः॑ । द्रव॑त्पाणी॒ इति॒ द्रव॑त्ऽपाणी । शुभः॑ । प॒ती॒ इति॑ । पुरु॑ऽभुजा । च॒न॒स्यत॑म् ॥ १ ॥

स्कन्द० 'अश्विनौ द्वयतोऽपि नृप एव । हे अश्विना ! यज्वरीः करणस्येयं कर्तृत्वेन विवक्षा[8] । इज्यते याभिस्ता यज्वरीः । इषः हविर्लक्षणान्यन्नानि । द्रवत्पाणी क्षिप्रहस्तौ, शीघ्रकारिणावित्यर्थः ।

1. आशाथे साम्य[1] कु. 2. नास्ति मूको. 3-3. मेधाविनौ अस्माकं मित्रावरुणौ बहूनां जातौ उरुक्षयौ बहुनिवासौ विस्तीर्णनिवासौ वा । लोकेषु सर्वत्र तत्र तत्र व्याप्तौ च निवसन्तौ च । दक्षं सेनालक्षणं बलं धारयतः कर्म च । अस्मदर्थं रोगेभ्यो युद्धादिकर्म कुरुतः वि[1] अ कु. 4. क्रान्तदर्शिनौ वि[1] ल साम्य[1]. 5. नास्ति ल वि[1] साम्य. 6-6. द्र. ३, ३, १ प्र- साम्य कु. 7. °पकार° मूको. 8-8. हे अश्विनौ वि[1] अ कु. 9. (हे !) इ° साम्य.

शुभस्पती 'शुभम्' (निघ १,१२) इत्युदकनाम । तस्याधिपती । पुरुभुजा बहुना हविषा भोक्तारौ । चनस्यतम् 'चन इत्यन्ननाम' (या ६, १६) । तदिच्छतं चनस्यतम् । इच्छया चात्र तत्पूर्वकं भक्षणं लक्ष्यते । अस्मदीयानि हवींषि भक्षयतमित्यर्थः ॥ १ ॥

वेङ्कट० यजमानस्य यज्ञूंषि अन्नादीनि क्षिप्रहस्तौ उदकस्य ईश्वरौ बहुभोजनौ चनस्यतम् चनोऽन्नं तदिच्छतम् । इह वृत्तस्यस्य कर्मणः पदान्तरेण पृथक् व्यक्त निर्देशः समानशब्दैरनेकत्र भवति 'गवां गोपतिः' (ऋ १,१०१,४), 'सोम सोमपातमाः' (ऋ १,२१,१), 'द्रविणोदा द्रविणसः' (ऋ १,१५,७) इति । इह तु समानार्थेन, इष्यश्चनस्यतमिति ॥१॥

मुद्गल० द्वादशर्चं तृतीयं सूक्तम् । आद्यस्तृच आश्विन । द्वितीय ऐन्द्र । तृतीयो वैश्वदेव । चतुर्थ सारस्वत । तेषु तृचेषु प्रतिपाद्या वाय्वादय सरस्वत्यन्ता सप्तसंख्याका प्रउगशस्त्रस्य देवता । मधुच्छन्दा ऋषि । गायत्रम् ॥

हे अश्विनौ ! युवाम् इषः हविर्लक्षणान्यन्नानि चनस्यतम् इच्छतम् भुञ्जाथामित्यर्थः । कीदृशीरिषः । यज्वरीः यागनिष्पादिकाः । कीदृशावश्विनौ । द्रवत्पाणी हविर्ग्रहणाय द्रवद्भ्यां त्वरद्भ्यां पाणिभ्यां युक्तौ । शुभस्पती शोभनस्य कर्मणः पालकौ । पुरुभुजा विस्तीर्णभुजौ ॥१॥

अश्विना पुरुदंससा नरा शवीरया धिया । धिष्ण्या वनतं गिरः ॥ २ ॥

अश्विना । पुरुऽदंससा । नरा । शवीरया । धिया । धिष्ण्या । वनतम् । गिरः ॥ २ ॥

स्कन्द० 'अश्विना हे अश्विनौ' पुरुदंससा 'दंस' (निघ २,१) इति कर्मनाम । बहुकर्माणावित्यर्थः । नरा मनुष्याकृती । शवीरया 'शु' (निघ २,१५) इति क्षिप्रनाम । ईर गतौ । क्षिप्रमीरणं गमनं शवीरम् । अथवा 'शव' (निघ २, ९) इति बलनाम । बलस्य प्रेरणमपनोदः शवीरं । तत् यौ प्राप्त गच्छतः तौ, शीघ्रगामिनौ बलस्यापनोदगामिनौ वेत्यर्थः । अथवा मत्वर्थीयस्य त्यात् पदस्य याशब्दो विभक्तेरादेशो न धातुरूपम् । शवीरशब्दस्तु पूर्ववत् कर्तृसाधनः । शीघ्रगामिनौ बलस्य प्रेरयितारौ वेत्यर्थः । सर्वतरौ नरपतेस्य शवीरशब्दः । यज्ञान् यजून् वा प्रति गन्तारावित्यर्थः । धिया प्रज्ञया चित्तेन । महताऽऽदरेणेत्यर्थः । धिष्ण्या 'धिषणा' (निघ १,११) इति वाङ्नाम । तस्या युक्तौ धिष्ण्यौ । स्तुत्यर्थे परमस्यमौ इत्यस्य । अथवा 'धी' (निघ ३,९) इति प्रज्ञानाम । तां वेदेते । धी वेदयित्री सर्वार्थग्रहण समर्था ययोस्तौ धिष्ण्यौ । धिष्णावेव धिष्ण्यौ । अत्यन्तप्रज्ञावित्यर्थः । वनतम् वन षण सम्भक्तौ । सम्भजतम् । गिरः अस्मदीयाः स्तुतिलक्षणा वाचः ॥ २ ॥

---

१-१ उभाविश्वनौ वि' अ कु. २ २ चन अन्नं तदिच्छतम् । 'सुप आत्मन क्यच्' (पा ३,१,८) इति चनस्यतम् वि' अ कु. ३ ३ यज्वनां हि साम्ब' कु. °अन्नादि वि' स्प. ४ मजस्य° साम्ब', मजन्य° साम्ब' १, प्रथमपरस कु. ५-५ वर्ते पदान्तरेण पृथक् वक्तुं नि° साम्ब' १, पृथक् नि° साम्ब' कु. ६-६ नास्ति वि' साम्ब. ७-७ बहुकर्माणौ । नरा मनुष्याकृती । शवीरया शु क्षिप्रम् । ईर गतौ । क्षिप्रगामिनौ । अथवा शवो बलं बलस्यापनोदगामिनौ । अथवाऽत्वर्थमहत्वात् 'सुपां सुलुक्' (पा ७, १, ३९) इति सवर्ण ... गतौ । नवीरा गन्तारम् । यजमानान् यजून् वा प्रति गन्तारौ । धिया प्रज्ञया । धिष्ण्या । धिषणा वाक् युक्तौ धिष्ण्यौ । 'सानुबन्धस्य ... वक्तव्यौ' (पा ४, १, १४०) इति यत् । अथवा धीः प्रज्ञा । तां वेदेते । यद्वा धी सर्वार्थग्रहण समर्था ते धिष्ण्यौ । स्वार्थे यत् । वनतं सम्भजताम् । 'वन षण' सम्भक्तौ । गिरः अस्मदीयाः वि' अ कु

वेङ्कट० अश्विनौ ! आश्चर्यभूतविविधकर्माणौ[1] नेतारौ क्षिप्रमुपहूतं प्रति गमनं यस्यास्तया धिया कर्मणा धिष्ण्या धिषणार्हौ । धिषणा वाक् । तया स्तोतव्यौ मनेषा स्तुती ॥ २ ॥

मुद्गल० अश्विना ! हे अश्विनौ ! युवां गिरः अस्मदीयाः स्तुतीः धिया आदरयुक्तया बुद्ध्या वनतम् सम्भजतं स्वीकुरुतम्[2] । कीदृशावश्विनौ । पुरुदंससा बहुकर्माणौ । नरा नेतारौ । धिष्ण्या धार्ष्ट्य-युक्तौ । कीदृश्या धिया । शवीरया गतियुक्तया ॥२॥

दस्रा युवाकवः सुता नासत्या वृक्तबर्हिषः । आ यातं रुद्रवर्तनी ॥ ३ ॥

दस्रा । युवाकवः । सुताः । नासत्या । वृक्तऽबर्हिषः । आ । यातम् । रुद्रवर्तनी इति रुद्रऽवर्तनी ॥ ३ ॥

स्कन्द० [1]हे दस्रा ! दस्रनामानौ । यद्यपि चाश्विनोरेको दस्रनामा, नासत्यनामाऽपरः, तथापि द्विवचननिर्देशादन्यतरनिर्देशेनापि सर्वत्र साहचर्यादुभयोः प्रतिपादनम् । क्रियाशब्दविज्ञानं वा । दसु उपक्षये, दसु च इत्येतस्य, दसि दर्शनदंशनयोरित्येतस्य वा दस्रौ । उपक्षपयितारौ शत्रूणां, दर्शनीयौ वेत्यर्थः । युवाकवः युवां कामयन्त इति युवाकवः । †कमेर्डुप्रत्यय औणादिकः । युवेऽमपि च प्रत्ययलक्षणेन युष्मदो युवादेशः । युष्मत्पानकामा इत्यर्थः । के । सुताः सोमाः । अथवा यु मिश्रण इत्यस्य युवाकवः । मिश्रिताः । केन । सामर्थ्याद् वसतीवर्यैकधनादिभिरद्भिः श्रयणैर्वा । सुताः अभिषुताश्च सोमाः । हे नासत्या ! नासत्यनामानौ । अन्यतरनाम्ना चेदं साहचर्यादुभयप्रतिपादनम् । न वा असत्यौ । द्वौ प्रतिषेधौ प्रकृतार्थं गमयतः । सत्यावेव । वृक्तबर्हिषः सोमाः । अवच्छिन्नावार्थं बर्हिर्येषां स्तीर्णमित्यर्थः । एतद् ज्ञात्वा आ यातम् आगच्छतम् । हे रुद्रवर्तनी रुद रौतेर्वा रुद्रा शब्दवती‡ वर्तनी गमनमार्गो ययोस्तौ रुद्रवर्तनी । यतो यत्र शत्रुशब्दः, ततस्तौ गन्तारौ । रुद्रस्य वा पथि गच्छन्तौ शब्दस्य कर्तारावित्यर्थः[1] ॥३॥

वेङ्कट० "दर्शनीयौ ! युष्मत्पानकामाः" सोमाः 'सत्यावेव नासत्यावित्यौर्णवाभः । सत्यस्य प्रणेतारा वित्याग्रायणः' (या ६, १३) । वृक्तबर्हिषः सोमाः स्तरणार्थं छिन्नबर्हिषः आगच्छत युद्धे घोरगमनमार्गौ ! ॥ ३ ॥

मुद्गल० हे अश्विनौ ! आ यातम् अस्मिन् कर्मण्यागच्छतम् । किमर्थमिति तदुच्यते । सुताः युष्मदर्थं सोमा अभिषुताः । तान्[2] स्वीकर्तुमिति शेषः । कीदृशावश्विनौ । दस्रा दस्रौ शत्रूणामुपक्षपयितारौ[3] । नासत्या अनृतभाषणरहितौ । रुद्रवर्तनी रुद्राणां शत्रुरोदनकारिणां शूरभटानां वर्तनिर्मार्गो ययोस्तौ रुद्रवर्तनी । कीदृशाः सोमाः । युवाकवः[4] वसतीवरीभिः एकधनाभिश्चाद्भिर्मिश्रिताः । वृक्तबर्हिषः वृक्तानि मूलैर्वर्जितानि बर्हींष्यास्तरणरूपाणि येषां सोमानां ते वृक्तबर्हिषः ॥३॥

---

१ °भूतकर्माणौ रुप. २ कुरु° मूको. ३. ३ दस्रा । अश्विनोरेको दस्रः नामधेयोऽपरः । उभाभ्यामुभयोरुक्तैः । तसु उपक्षये दसु च । दसि दर्शनदंशनयोः । 'स्फायितञ्चि' (पाउ २. १२) इत्यादिना रक् । शत्रूणामुपक्षयितारौ वा दर्शनीयौ वा । युवाकवः । युवां कामयन्ते । कमेर्डुप् । अभिषुताः । अथवा यु मिश्रणे । वसतीवर्येकधनाभिः मिश्रदशीभाः । अभिषुताः सोमाः । नासत्या हे नासत्यौ । न असत्यौ सत्यावेव । वृक्तबर्हिषः वृक्तानि बर्हींषि येषां सोमानां ते सोमाः । अवच्छेदनार्थं बर्हींषि येषां सोमाः । आयातम् । एतद् ज्ञात्वा आगच्छतम् । हे रुद्रवर्तनी । रुदे रौतेर्वा । 'रोदेर्णिलुक् च' (पाउ २. २२) इति रक् । रुद्रा शब्दवती गमनमार्गो ययोस्तौ रुद्रवर्तनी । यतो यत्र शब्दः ततस्तत्र गन्तारौ सशब्दगामिनौ वा । वि॰ अ कु. † कमेडुप° मूको. ‡ शब्दयती मूको. ४४ नास्ति रुप वि॰. ५ तत् मै॰, नास्ति वि मै॰. ६ "क्षयिता" मूको. ७ °कन अभिषुता मूको.

इन्द्रा याहि चित्रभानो सुता इमे त्वायवः । अण्वीभिस्तना पूतासः ॥ ४ ॥

इन्द्र । आ । याहि । चित्रभानो इति चित्रऽभानो । सुताः । इमे । त्वाऽयवः । अण्वीभिः । तना । पूतासः ॥ ४ ॥

स्कन्द० "ऐन्द्राद्य पञ्चमस्तृच ।" योऽयं पञ्चमस्तृच, स इन्द्रदेवत । हे इन्द्र ! आ याहि आगच्छ । चित्रभानो ! भानुर्दीप्ति । विचित्रदीप्ते ! पूजनीयदीप्ते ! वा । किं कारणम् । सुता अभिषुता इमे सोमा । त्वायव त्वत्कामा । [illegible] नामेन्द्रोऽस्मात् पिबेत् इत्येवंकामा इत्यर्थ । नचाभिषुता एव केवल, किन्तर्हि, अण्वीभि तना पूतास अण्व्य इत्यङ्गुलीनाम । 'धारेण श्वश्वता तना' (ऋ ९, १,६), 'तना पुनान आयुषु' (ऋ ९,१९,८) इत्यादिदर्शनात् तनाशब्दो दशापवित्रवचन । अण्वीभिर्दशापवित्रेण च पूता । हस्तेन दशापवित्रमादाय पूता सर्वा इत्यर्थ ¹ ॥ ४ ॥

वेङ्कट० 'इन्द्र ! आगच्छ' चित्रदीप्ते ! । सुता 'इमे सोमा त्वत्कामा मत्वर्थीया अङ्गुलीभि दशापवित्रेण च पूता ¹ ॥ ४ ॥

मुद्गल० हे चित्रभानो चित्रदीप्ते इन्द्र ! अस्मिन् कर्मणि आ याहि आगच्छ । सुता अभिषुता इमे सोमा त्वायव त्वा कामयमाना वर्तन्ते । अण्वीभि ऋत्विजामङ्गुलीभि सुता इत्यर्थ । किंच एते सोमा तना नित्य पूतास पूता शुद्धा ॥ ४ ॥

इन्द्रा याहि धियेषितो विप्रजूतः सुतावतः । उप ब्रह्माणि वाघतः ॥ ५ ॥

इन्द्र । आ । याहि । धिया । इषितः । विप्रऽजूतः । सुतऽवतः । उप । ब्रह्माणि । वाघतः ॥ ५ ॥

स्कन्द० इन्द्र ! 'आ याहि आगच्छ । धिया अस्मदीयया प्रज्ञया । इषित बुद्धोऽस्मयमितिविरधि पूर्वाचा इत्यर्थ । अथाह अस्माभि इत्यर्थ । विप्रजूत 'विप्र' (निघ ३ १५) इति मेधाविनाम । ऋत्विगित्यर्थ । ऋत्विजोऽपि च सोपसर्गाय । मेधाविभिर्ऋत्विग्भिरभिगत । कथ । सामर्थ्यात् स्तुतिभि । मयाऽस्माभिरन्यैश्चर्त्विग्भिरभिष्टुत इत्यर्थ । आगच्छामि । उच्यते । सुतावत सुता सोमा यस्य सन्ति स सुतावान् यजमान, तस्य । उप ब्रह्माणि उपशब्द सामीप्ये । 'ब्रह्म' (निघ २ ७) इत्यन्ननाम । यजमानस्य स्वभूतानां हविर्लक्षणानामन्नानां समीप इत्यर्थ । वाघत ऋत्विङ्नामैतत् (द्र निघ ३,१८) । इह तु सुतावतो यजमानस्य विशेषणत्वाच्छब्दार्थीनमर्थं । ऋत्विग्वतो यजमानस्य इति । अथवा वाघत इत्यतोऽपि सुतावत इत्यनद्विशेषणम् । ब्रह्मशब्दश्च स्तुतिवचन । सुतावत इमसोमाभिषवस्य ऋत्विजो वा स्तुतय तत्समीपे । यत्र सोममभिषुत्यैव स्तुवन्तीत्यर्थ ¹ ॥ ५ ॥

वेङ्कट० 'इन्द्र ! आगच्छ कर्मणा प्रेषित मेधाविभिराहूत यजमानस्य यो होता तस्य स्तोत्राणि' ॥ ५ ॥

---

¹ [illegible] १ इन्द्र ! आगच्छ विचित्रदीप्ते ! पूजनीयदीप्ते ! वा । किं कारणम् । अभिषुतास्सोमा । त्वायव त्वत्कामा । [illegible] । अण्व्य अङ्गुल्य । तना [illegible] । [illegible] एव न, इत्येव [illegible] पूता । [illegible] मूको २ २ इन्द्रागच्छ [illegible] माष्य ¹, [illegible] कला कु ३ ३ नास्ति [illegible] । [illegible] माष्य ² ४ ४ आगच्छ [illegible] धिया अर्थात् अस्मदन्यधिनि । [illegible] । [illegible] मेधाविभि ऋत्विग्भि अभिष्ट्र । यथा ऋत्विजश्च स्तुत । [illegible] सुता [illegible] । [illegible] यजमानार्थान्यमनी । [illegible] । [illegible] मत्वा । [illegible] वा स्तुत्य [illegible] ५ ५ नास्ति [illegible] । [illegible] माष्य ².

मुद्गल० हे इन्द्र ! त्वम् आ याहि अस्मिन् कर्मण्यागच्छ । किमर्थम् । वाघत ऋत्विज ब्रह्माणि वेदरूपाणि स्तोत्राणि उपैतुम् । कीदृशस्त्वम् । धिया अस्मदीयया प्रज्ञया इषित प्राप्त । अस्मद्भक्त्या प्रेरित इत्यर्थ । विप्रजूत यथा यजमानभक्त्या प्रेरितस्तथाऽन्यैरपि ऋत्विग्भि प्रेरित । कीदृशस्य वाघत । सुतावत अभिषुतसोमयुक्तस्य ॥५॥

इन्द्रा याहि तूतुजान उप ब्रह्माणि हरिवः । सुते दधिष्व नश्चनः ॥६॥

इन्द्र । आ । याहि । तूतुजान । उप । ब्रह्माणि । हरिऽवः । सुते । दधिष्व । नः । चनः ॥६॥

स्कन्द० हे इन्द्र ! आ याहि तूतुजान क्षिप्रनामैतत् (तु निघ २, १५) । क्षिप्र त्वरमाण इत्यर्थ । उप ब्रह्माणि हे हरिव हरी अश्वौ, तद्वन् । आगत्य च सुते इति द्वितीयार्थे सप्तमी । सुतम् अभिषुतम् । दधिष्व धारय स्वोदरे । पिबेत्यर्थं । न अस्माक स्वभूत चन सोमलक्षणमन्नम् ॥ ६ ॥

वेङ्कट० 'इन्द्र' उपागच्छ त्वरमाण स्तोत्राणि गमनसाधनभूताश्ववन् । आगत्य चास्मिन् सुत सोमे अस्मभ्यमन्न देहि ॥ ६ ॥

मुद्गल० हे हरिव ! अश्वयुक्त इन्द्र ! त्व ब्रह्माणि स्तोत्राणि उप उपैतुम् आ याहि आगच्छ । कीदृशस्त्वम् । तूतुजान त्वरमाण । आगत्य चास्मिन् सुते सोमाभिषवयुक्ते कर्मणि न अस्मदीय चन अन्न हविर्लक्षण दधिष्व धारय स्वीकुर्वित्यर्थ ॥६॥

इति प्रथमाष्टके प्रथमाध्याये पञ्चमो वर्ग ॥

ओमासश्चर्षणीधृतो विश्वे देवास आ गत । दाश्वांसो दाशुषः सुतम् ॥७॥

ओमास । चर्षणिऽधृत । विश्वे । देवास । आ । गत । दाश्वांस । दाशुष । सुतम् ॥७॥

स्कन्द० 'वैश्वदेवस्तृच पर ।' हे ओमास 'अवतेरव पालनार्थस्य तर्पणार्थस्य वा' कर्तरि मन् प्रत्यय । अवितार रक्षितार तर्पयितारो वा । चर्षणीधृत चर्षणयो मनुष्या तेषा तैस्तैरुपकारैर्धारयितार । 'विश्वे सर्वे देवास देवा आ गत आगच्छत' । दाश्वास 'प्रत्ययस्थतोऽत्र मन्त्र । न चदसा मन्त्रितम् । अतो दाश्वान्दत्तवान्' इत्यादिकवाक्यता नेष्टा' । ये दाश्वासो दत्तवन्तो यष्टारानाम धनानि ते । 'दाशुष हवींषि दत्तवत यजमानस्य स्वभूत सुतम् सोम प्रति ॥ ७ ॥

वेङ्कट० अवितार मनुष्यधृत सर्वे देवा इहागच्छत दत्तवन्तो दाशुष सुतम् ॥ ७ ॥

मुद्गल० हे विश्वे देवास ! देवा ! दाशुष हविर्दत्तवतो यजमानस्य सुतम् अभिषुत सोमं प्रति आगत आगच्छत । ते च देवा ओमास रक्षका चर्षणीधृत मनुष्याणा धारका दाश्वास फलस्य दातार ॥७॥

विश्वे देवासो अप्तुरः सुतमा गन्त तूर्णयः । उस्रा इव स्वसराणि ॥८॥

विश्वे । देवास । अप्ऽतुर । सुतम् । आ । गन्त । तूर्णय । उस्राःऽइव । स्वसराणि ॥८॥

---

१ १ आगच्छ त्वरमाण । तुज त्वरणे । क्रियासमभिहारे यङ्लुक् । उप ब्रह्माणि व्याख्यानम् । हरिव अश्ववन् । 'मतुवसो रु सम्बुद्धौ छन्दसि' (पा ८,३,१) इति रु । सुत द्वितीयार्थे सप्तमी । अभिषुत धारय । न चन अस्माक सोमलक्षणमन्नम वि' अ कु २ २ नास्ति रुप आगच्छ कु त्वामिन्° र ३ नास्ति वि मै' ४ ४ अव पालनतर्पणयो वि' अ कु ५ नास्ति वि' अ कु ६ ६ विश्वे देवास सर्वे देवा आगच्छत । ओरोगुरु वि' अ

स्कन्द० "[1]सारस्वतोऽयं सप्तमस्तृचः ।[1] सरस्वतीदेवतोऽयम् । पावका शोधयित्री [2]अंहसां पापानामपनेत्री । अथवा पवतिः क्षरणार्थः । 'सोमः पवते जनिता मतीनाम्' (ऋ ९,९६,५) इति । ण्यन्तश्चात्र द्रष्टव्यः[2] । क्षारयित्र्युदकानाम् । नः [3]अस्माकं स्वभूतम्[3] । सरस्वती मध्यमस्थाना[3] वाक् । कीदृशी । वाजेभिः वाजिनीवती "[4]वाजः" (निघ २,७) इत्यन्ननाम । वाजिनीशब्दोऽपि तस्यैव पर्यायान्तरं द्रष्टव्यम् । यजमानेभ्यो यानि ददाति तैः, हविर्लक्षणैस्त्वान्नैरन्नवती । अथवा वाजेभिरिति तृतीयानिर्देशाद् युक्तमिति वाक्यशेषः । हविर्लक्षणैरन्नैर्युक्तम् । वाजिनीवती वाजो बलं (द्र. निघ २, ९) वेगो वा, तद्वती वाजिनी । काऽसौ । सरस्वत्याः स्वभूता सेना । तद्वती वाजिनीवती सरस्वती । अथवा वाजो हविर्लक्षणमन्नं, तद् यस्या अस्ति सा वाजिनी यागसन्ततिः । तद्वती वाजिनीवती सरस्वती । यज्ञं वष्टु वश कान्तौ । कामयताम् । कामनेनात्रागमनं संभजनं च लक्ष्यते । यो हि यं कामयते, स तमागच्छति, सम्भजति च । आगच्छतु, सम्भजतां चेत्यर्थः । धियावसुः प्रज्ञाधना । अथवा वसेराच्छादनार्थस्य वसुशब्दः । प्रज्ञयाऽऽच्छादयित्री सर्वार्थानाम्[5] ॥१०॥

वेङ्कट० शोधयित्री अस्माकं सरस्वती अन्नैः अन्नवती यज्ञम् वहतु कामयतां वा । प्रज्ञया सर्वेषां वासयित्री ॥ १० ॥

मुद्गल० सरस्वती देवी वाजेभिः हविर्लक्षणैरन्नैर्निमित्तभूतैः नः अस्मदीयं यज्ञम् वष्टु कामयताम् । कामयित्वा च निर्वहत्वित्यर्थः । कीदृशी सरस्वती । पावका शोधयित्री । वाजिनीवती अन्नवत्क्रियावती । धियावसुः कर्मप्राप्यधननिमित्तभूता ॥१०॥

चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् । यज्ञं दधे सरस्वती ॥११॥

चोदयित्री । सूनृतानाम् । चेतन्ती । सुमतीनाम् । यज्ञम् । दधे । सरस्वती ॥११॥

स्कन्द० चोदयित्री "सूनृतानाम् अपठितमपि वाङ्नामैतत्[6] । मध्यमस्थाना हि सरस्वती । सा [6]च गर्जितलक्षणां वाचं चोदयित्री । चेतन्ती ज्ञापयन्ती । सुमतीनाम् द्वितीयार्थे षष्ठीयम् । सुमतीन् भक्तिपरान् यजमानान् । यज्ञम् दधे धारयति सरस्वती भूयिष्ठस्य यज्ञस्य मन्त्रलक्षणवागायत्तत्वाद्, तस्याश्च सरस्वत्यायत्तत्वात्[6] ॥११॥

वेङ्कट० चोदयित्री सत्यानां प्रज्ञापयन्ती उदाराणां सुमतीनाम्, यज्ञम् धारयति[7] सरस्वती मन्त्रभूता[8] ॥११॥

मुद्गल० या सरस्वती सेयमिमं यज्ञम् दधे धारितवती । कीदृशी । सूनृतानाम् प्रियाणां सत्यवाक्यानां चोदयित्री प्रेरयित्री । सुमतीनाम् शोभनबुद्धियुक्तानामनुष्ठातॄणां चेतन्ती तदीयमनुष्ठेयं ज्ञापयन्ती ॥११॥

---

१-१. पावका शोधयित्री अंहसामपनेत्री । पवतिः क्षरणे वा ण्यन्तश्चात्र वि[1] अ कु. २-२. नास्ति वि[1] अ कु. ३. प्रथमस्थाना साम्ब. ४-४. अन्नैरन्नवती अन्नयुक्ता । वाजो बलं वेगो वा । स्वसेनायुक्ता हविर्लक्षणान्नवत्या अस्तीति वा । यज्ञं वष्टु वश कान्तौ संभक्तौ च । यज्ञमिच्छतु आगच्छतु संभजताम् । वष्ट्विति प्रार्थनया अत्रागमनसंभजने च लक्ष्येते । धियावसुः प्रज्ञाधना प्रज्ञयाऽऽच्छादयित्री वा वि[1] अ कु. ५-५. प्रेरयित्री पथ्यसत्यवतीनां वाचाम् वि[1] अ कु. ६-६. सा मेघगर्जनेन चोदयित्री । चेतन्ती । चिति स्मृत्याम् जानन्ती । सुमतीन् भक्तिपरान् यजमानान् । यज्ञं दधे यज्ञं धारयति सरस्वती । भूयिष्ठस्य यज्ञस्य मन्त्ररूपा वाक् सरस्वत्यायत्ता ततः वि[1] अ कु. ७. धारयित्री साम्ब[2,1]; धारयन्ती साम्ब[1] ८. मन्त्ररूपा वि[1] ल.

जुहूमसि आह्वयामः। दृष्टान्तः--सुदुघे गोदुहे गोधुगर्थं सुदुघामिव सुष्ठु दोग्ध्रीं गामिव। यथा लोके गोदोग्धा तदर्थं तस्याभिमुख्येन दोग्ध्रीं गामाह्वयति तद्वत् ॥१॥

उप॑ नः॒ सव॒ना ग॑हि॒ सोम॑स्य सोमपाः पिब। गो॒दा इद्रे॒वतो॒ मदः॑ ॥२॥

उप॑। नः॒। सव॑ना। आ। ग॒हि॒। सोम॑स्य। सो॒म॒ऽपाः॒। पि॒ब॒। गो॒ऽदाः। इत्। रे॒वतः॑। मदः॑ ॥२॥

स्कन्द० [1]'उपेत्युपसर्ग आगहीत्याख्यातेन सम्बध्यते। उप आ गहि उपागच्छ। नः अस्माकं स्वभूतानि सवनानि प्रातस्सवनमाध्यन्दिनतृतीयसवनानि। यज्ञनाम वा (तु निघ ३, १७) सवनशब्दः। यज्ञान्। उपागत्य च, सोमस्य द्वितीयार्थे षष्ठी। षष्ठीश्रुतेरेकदेशमिति शेषः। सोमं सोमस्य चैकदेशं, स्वांशलक्षणं वा। हे सोमपाः! सोमानां पातः! पिब किं कारणम्। उच्यते। गोदा इत्, इच्छब्दः पदपूरणः, यस्मादर्थे वा। गवां दाता यस्मात्। रेवतः धनवतः तव मदः। यस्मात् त्वं सोमेन मत्तो गा ददासीत्यर्थः[1] ॥२॥

वेङ्कट० उपागच्छ अस्माकं सवनानि सोमं च सोमपातः! पिब अथ परोक्षः। गोदाः एव भवत्या-श्रितस्य [2]आढ्यस्य। मदः[3] तस्य आढ्य. प्रयच्छति पशूनिति ॥ २ ॥

मुद्गल० हे सोमपाः! सोमं पातुं नः अस्मदीयानि सवना त्रीणि सवनानि प्रति उप समीपे आ गहि आगच्छ। आगत्य च सोमस्य सोमं पिब रेवतः धनवतस्तव मदः हर्षः गोदा इत् गोप्रद एव। त्वयि हृष्टे सत्य-स्माभिर्गावो लभ्यन्त इत्यर्थः ॥२॥

अथा॑ ते॒ अन्त॑मानां वि॒द्याम॑ सुमती॒नाम्। मा नो॒ अति॑ ख्य॒ आ ग॑हि ॥३॥

अथ॑। ते॒। अन्त॑मानाम्। वि॒द्याम॑। सु॒ऽम॒ती॒नाम्। मा। नः॒। अति॑। ख्यः॒। आ। ग॒हि॒ ॥३॥

स्कन्द० [4]'अथेत्यानन्तर्ये। अथ सोमपानानन्तरम्। ते तव अन्तमानाम् द्वितीयार्थे षष्ठीयम्। अन्तमान् सन्निकृष्टान्। विद्याम विद ज्ञाने। जानीयाम। कीदृशान्। सुमतीन् स्वप्रज्ञामहत्त्वोपेतान्। तव स्वयमपि सन्निकृष्टः इन्द्र! सन्निकृष्टान् ज्ञातुमलमिति स्वसन्निकर्षोऽनेन प्रकारेणाशास्यते। अथवा अन्तमानां सुमतीनामिति निर्धारणे षष्ठी। तव सन्निकृष्टानां सुमतीनाम् मध्ये विद्याम। विद् सत्ता-याम्। वयमपि भवेमेत्याशास्महे। अथवा विद्लृ लाभे इत्येतस्यैतद्रूपम्। तव यानि सन्निकृष्टानि सुमतीनि। मतिः स्तुतिः, मन्यतेरर्चतिकर्मत्वात् (तु निघ ३,१४)। सुस्तुतीनि सुष्ठुस्तुतानि अत्यन्तो-त्कृष्टानि धनानि, तानि, तेषां वैकदेशं लभेमहि। किञ्च मा नः अतिख्यः अतिपूर्वोऽत्र ख्यातिः सामर्थ्यात् परित्यागेऽतिक्रमे वा। मा प्रथने। माऽस्मान् [5]कदाचिदपि परित्याक्षीः, अतिक्रमीर्वा। किन्तर्हि। सर्वदैवागच्छ। अथवा ख्यातिः प्रथनार्थ एव। न इति कर्मश्रुतेः, अतीति चोपसर्गाद् योग्यक्रियाध्याहारः। माऽस्मानतिप्रख्य। मा अन्येभ्य प्रकाशीभूः। अन्यसकाशं मा गम। अस्मत्समीपमेवागच्छेत्यर्थः[4] ॥३॥

---

१-१. उपागच्छ अस्माकं सवनानि त्रीणि च। यज्ञो वा सवनम्। यज्ञान्। उपागत्य च सोमस्य हे सोमपाः! सोमं पिब सोमस्यैकदेशं वा। कस्मात्। यस्मात् गवां दाता। रेवतः धनवतः तव मदः। यस्मात् त्वं मत्तः गा ददासि वि॰ भ कु. २. आढ्यस्य ल. ३. मदतु॰ कु. ४-४ अथ सोमपानानन्तरम्। तव अन्तमान् सन्निकृष्टतमान् विद्याम जानीयाम। सुमतीन् स्वप्रज्ञान् स्थिर (स्थिर)प्रज्ञोपेतान्। वयं सन्निकृष्टाश्च त्वत्कृतान् जानीयाम इत्याशास्महे। प्रकारान्तरेण स्तम्भते। अथवा निर्धारणे षष्ठी। तव सन्निकृष्टानां सुमतीनां मध्ये वयमपि भवेम इति वा आशा। अथवा सुमतिः सुस्तुतिः। अत्यन्तोत्कृष्टानि धनानि। तानि लभेम तेषा एकदेशम्। किञ्च मा नः अतिख्यः। अतिख्यातिः परित्यागे अतिक्रमे वा। न प्रथने। माऽस्मान् कदाचिदपि परित्याक्षीः अतिक्रमीर्वा। किं तर्हि आगहि सर्वदैव। ख्या प्रथने वा। अतः योग्यक्रियाध्याहारश्च। मा अस्मान् अति ख्य अन्येभ्यश्च मा गमः। अस्मत्समीपमेव आगच्छ वि॰ भ कु. ५. मा प्रथने नास्मान् मुञ्चो.।

मुद्गल० वज्रबाहुः इन्द्रः शत्रौ हते सति निःसपत्नो भूत्वा यातः गच्छतो जङ्गमस्य अवसितस्य एकत्रैव स्थितस्य स्थावरस्य शमस्य शान्तस्य शृङ्गराहित्येन प्रहरणाद्यप्रवृत्तस्याश्वगर्दभादेः शृङ्गिणः शृङ्गोपेतस्य महिषबलीवर्दादेश्च राजा अभूत् । सः इत् उ स एव इन्द्रः चर्षणीनाम् मनुष्याणाम् राजा भूत्वा क्षयति निवसति । ता तानि पूर्वोक्तानि जङ्गमादीनि सर्वाणि परि बभूव व्याप्तवान् । दृष्टान्तः । अरान् न नेमिः यथा रथचक्रस्य परितो वर्तमाना नेमिः अरान् नाभौ कीलितान् काष्ठविशेषान् व्याप्नोति तद्वत् ॥ १५ ॥

इति प्रथमाष्टके द्वितीयाध्याये अष्टात्रिंशो वर्गः ।



इति ऋग्भाष्ये द्वितीयोऽध्यायः समाप्तः ॥



मुख्यस्तत्पुरुषः प्रोक्तो द्वन्द्वश्च तदनन्तरः[1]।
तृतीयस्तु बहुव्रीहिरव्ययीभाव उत्तरः ॥ २ ॥
तत्रोत्तरपदार्थस्य प्राधान्यं यत्र वर्तते[2]।
उदात्तस्तत्र भवति 'सुरूपकृत्नुमूतये'[3] ॥ ३ ॥

'द्रविणोदा द्रविणसो'[4], 'हव्यवाहं पुरुप्रियम्'[5]।
'त्रिष्वादित्यं द्रुपदेषु'[6], 'गों हिरण्यस्य दस्म'[7] ॥ ४ ॥
यदि स्वरः[8] पूर्वपदे तदर्थं प्रस्फुटो भवेत्।
'भगभक्तस्य ते वयम्'[9], 'विर्भूत मुतार्वत'[10] ॥ ५ ॥

'तेनेदि सत्यमस्तृतम्'[11], 'अनाधृष्टास ओजसा'[12]।
'अच्छिन्नपत्रा सचन्ताम्'[13], 'अग्ना सन्त्वनिषं'[14] ॥ ६ ॥
अनुदात्तश्च षष्ठो नञ्[15] 'अयोद्धाऽइव दुर्मदः'[16]।
तत्रोत्तरपदे प्राधान्यमिति निर्णयः ॥ ७ ॥

कार्ययोगो यदि द्वन्द्व उभयोरपि दृश्यते।
स्थितेः[17] पूर्वपदस्यार्थे द्वितीयस्यापि संग्रहः ॥ ८ ॥
अन्तोदात्तस्ततो द्वन्द्वः 'इन्द्रवायू बृहस्पतिम्'[18]।
'ऋक्सामाभ्यामभिहितौ'[19], 'इहेन्द्राग्नी उप ह्वये'[20] ॥ ९ ॥
समप्राधान्ययोर्द्वन्द्वे उदात्त उभयोरपि।
'द्यावापृथिवी मरुतः'[21], 'ह्वयामि मित्रावरुणौ'[22] ॥ १० ॥
प्रधानं द्वन्द्वे पूर्वोऽत्र प्रधानं क्वचिदुत्तरः।
स सोमारुद्रयोर्द्वन्द्वे[23] 'मा सहूता'[24] निदर्शनम्[25] ॥ ११ ॥
बहुव्रीहिषु तात्पर्यं विशेषणविशेष्ययोः।
'अग्निर्होता कविक्रतुः'[26], 'अग्ने सूपायनो भव'[27] ॥ १२ ॥
'मित्रं हुवे पूतदक्षम्'[28], 'आ नो विष्णुरुरुक्रमः'[29]।
'पञ्चपाद'[30], 'शतचक्रं'[31], 'त्रिचक्रेण'[32], 'त्रिनाभि'[33] च ॥ १३ ॥

---

१ °नन्तरम् वि° मा° रवि° २ तिष्ठते मा° रवि° ३ ऋ १,४,१ ४ ऋ १,१५,७ ५ ऋ १,१२,२ ६ ऋ १,२४,१३ ७ ऋ १,३०,१६, °थ सद्रा रवि ८ स्वरं लप वि° ९ ऋ १,२४,५ १० ऋ १,३,५, °स वाजन रवि ११ ऋ १,१५,५ १२ ऋ १,१९,४ १३ ऋ १,२२,११ १४ ऐन्द्रि चालीन रवि, ऋ १,२१,२ १५ न वि° लप १६ तु पपा, ऋ १,३२,६ † °द्वेषं मुक्ते १७ नास्ति लप वि° १८ ऋ १,१४,३ १९ ऋ १०,८५,११; °सामभ्या° वेंकट २० ऋ १,२१,१ २१ ऋ १०,६३,९ २२ ऋ १,३५,१ २३ तु तै २,२,१०,५ सोमारुद्रयो। सोमा° वेंकट २४ ऋ २,३३,४, °हूतीभि वेंकट, °भूतीभि वि°, हूती लप २५ दर्शनम् वेंकट २६ ऋ १,१,५ २७ ऋ १,१,९ २८ ऋ १,२,७ २९ ऋ १,९०,९ ३० ऋ १,१६४,१२ ३१ ऋ १,१६४,२ ३२ १,११८,२ ३३ ऋ १,१६४,२.

उप अयाम प्राप्नवाम[1] । स चेन्द्र अनानृण हिंसकरहित सन् अस्माकम् देवानाम् प्रमतिम् गोलाभेन हर्षयित्वा प्रकृष्टा बुद्धिम् सु वक्षाति सुष्ठु वर्धयति । आत् अनन्तरम् स इन्द्र अस्य राय धनस्य गवाम् गोरूपस्य सम्बन्धि परम् केतम् उत्कृष्ट ज्ञानम् न अस्माकम् कुवित् आवर्जत अधिक प्रापयति[2] ॥ १ ॥

उपेदहं धनदामप्रतीतं जुष्टां न श्येनो वसतिं पतामि ।
इन्द्रं नमस्यन्नुपमेभिरर्कैर्यः स्तोतृभ्यो हव्यो अस्ति यामन् ॥ २ ॥

उप । इत् । अहम् । धनऽदाम् । अप्रतिऽइतम् । जुष्टाम् । न । श्येन । वसतिम् । पतामि ।
इन्द्रम् । नमस्यन् । उपऽमेभि । अर्कै । य । स्तोतृऽभ्य । हव्य । अस्ति । यामन् ॥ २ ॥

स्कन्द० उप शब्द पतामि इत्याख्यातेन सम्बन्धयितव्य । इत् शब्द पदपूरण । अहम् धनदाम् धनस्य दातारम् अप्रतीतम् अप्रतिगतम् । शत्रुभि अमरयाभिभूतपूर्वमित्यर्थ[1] । जुष्टाम् न श्येन वसतिम् यथा प्रिया वसति[2] निवासस्थान श्येन उपपतेत् एवमुपपतामि उपगच्छामि । कम् । इन्द्रम् । कथम्भूत[3] नमस्यन् परिचरन्[4] । कोदृशै । उपमेभि 'उपम' ( निघ २,१६ ) इति अन्तिकनाम । "सन्निकृष्टै । इन्द्रस्य योग्यैरित्यर्थ[5] । कै[6] । अर्कै मन्त्रै । मन्त्रै स्तुतिभिरित्यर्थ । कीदृशमिन्द्र[7] । उच्यते । य स्तोतृभ्य पञ्चम्यर्थे चतुर्थ्येषा । स्तोतृणाम् हव्य आह्वातव्य [10]अस्ति भवति[10] । क्व[8] । यामन् अधिकरणेऽस्य अभिर्द्धत्य । यान्ति देवता अस्मिन्निति यामा[11] यज्ञ तत्र ॥ २ ॥

वेङ्कट० उप एव पतामि अहम् धनस्य दातार शत्रुभिरप्रतिगतम् इन्द्रम्[12] अर्चयन् उपमतनभूतै मन्त्रै[13] । य इन्द्र स्तोतृभ्य हव्य भवति [14]यज्ञे अहनि[14] वेति[15] ॥ २ ॥

मुद्गल० [16]य इन्द्र[16] स्तोतृभ्य स्तोतृणाम् अनुष्ठातृणाम् अनुग्रहार्थम् यामन् अवीयशत्रुभि सह युद्धति युद्धे हव्य अस्ति वैराह्वातव्यो भवति । तम् इन्द्रम् अहम् अनुष्ठाता उपेत् पतामि उपगम्यो-म्येव । किं कुर्वन् । उपमेभि उपमानस्थानीयैरुत्तमै अर्कै स्तोत्रै सह नमस्यन् पूजयन् । कीदृशमिन्द्रम् । धनदाम् धनप्रदम् अप्रतीतम् अप्रतिगतम् । बलिभिरतिरस्कृतमित्यर्थ । इन्द्र-प्राप्तौ दृष्टान्त । जुष्टाम् पूर्वं सेवितां वसतिम् स्वकीयनीडरूपा निवासभूमिम् श्येन न यथा श्येननामको वेगवान् पक्षी स्वकीयस्थान प्रति आदरेण धावति तद्वत् अहम् इन्द्रम् त्वरया प्राप्नोमि ॥ २ ॥

नि सर्वसेन इषुधीँरसक्त समर्यो गा अजति यस्य वष्टि ।
चोष्कूयमाण इन्द्र भूरि वामं मा पणिर्भूरस्मदधि प्रवृद्ध ॥ ३ ॥

---

१ प्राप्नुवाम मूको　२ °भे वि　३ °मूजनि° कु　४ °सति भ　५ नास्ति मूको
६ परिचरणकर्मा भम् । परि° कु　७-७ °स्य इत्यथ कु, सन्निकृष्टैरित्यथ भ　८ नास्ति कु　९ य कीदृ°
रवि, कीदृश इन्द्र कु　१०-१० नास्ति भ कु　११ याम कु　१२ सेन्द्रं वा° वि° रूप रवि कु
१३ तु रवि, नास्ति मूको　१४-१४ यज्ञो हनि कु, °ज्ञे हनि भ°　१५ वेति मूको　१६-१६ नास्ति वि.

स्कन्द० ते वि आयन् इति तच्छब्दश्रुतेर्यच्छब्दोऽत्राध्याहार्यः । उत्तरार्धर्चस्यैश्च भूयोभिर्बहुवचनान्तैः सामानाधिकरण्यात् दस्युम् धनिनम् इति बहुवचनस्य स्थाने एकवचनम् । यान् वधी हि[1] हिशब्दः पदपूरणः । हतवानसि दस्युम् दस्यून् शत्रून्[2] धनिनं धनवतः घनेन निष्ठुरेण वज्रेण एकः एव चरन् पर्यटन् । न च केवलेन वज्रेण । किन्तर्हि[3] । उपशाकेभिः शक्यन्ते यैर्दस्यवो हन्तुं ते शाकाः शक्तयः । उपशब्दस्तु धात्वर्थानुवादी । शक्तिभिश्च । हे इन्द्र ! । अथवा अङ्गिरसोऽत्र उपशाका अभिप्रेताः । "चरन्नित्येतदपेक्षा च सहयोगलक्षणा" तृतीया । एकः[5] एवात्रधीः अङ्गिरोभिः सह पर्यटन्नि-त्यर्थः । अङ्गिरसो हि 'इन्द्रो विदुरङ्गिरसश्च घोराः' ( ऋ १०,१०८,१० ) इति घोरत्वादि-दर्शनात् इन्द्रात् किञ्चिन्न्यूनशक्तयः । अत एषां तत्सदृशशक्तित्वादिन्द्रापेक्ष उपशाकव्यपदेशः । इन्द्रस्य च सहायोऽङ्गिरसः । सखिभिश्च सह पर्यटनमप्युपपन्नम्[6] । धनोः अधि धनुःशब्दः अप-ठितोऽपि[7] अन्तरिक्षनाम । धन्वशब्दस्य वा ( तु निघ १,३ ) अन्तरिक्षनाम्नः छान्दसमिदं सम्प्रसारणं नकारलोपश्च । अन्तरिक्षस्योपरि विषुणक्[8] विष्वक् इतश्चेतश्च ते वि आयन् विगता नष्टाः । मद्गा[9] अपि सन्तः अयज्वानः यज्ञस्य समन्तादयष्टारः पुराणवचनस्येदं रूपम् । चिरन्तनाः अयष्टारः । जन्मन एव प्रभृति यागवर्जिता इत्यर्थः । प्रेतिम् प्रयाणं मरणम् ईयुः गताः । नष्टा अपि सन्तस्त्वया मारिता एवेत्यर्थः ॥ ४ ॥

वेङ्कट० वधी हि त्वं वज्रेण उपक्षययितारं धनवन्तं वृत्रम् एकः एव चरन् सहायभूतैः मरुद्भिः सह । तत्र तव धनुषः सकाशात् विष्वक् ते वृत्रसहायाः विविधं गताः । अयजमानाः प्रसृता[9] ते मरणं गताः ॥ ४ ॥

मुद्गल० हे इन्द्र[1] धनिनम् बहुधनोपेतम् दस्युम् चोरं वृत्रम् घनेन कठिनेन[10] वज्रेण वधी हि हतवान् खलु उपशाकेभिः समीपवर्तिभिः शक्तियुक्तैः मरुद्भिः सहितो भूत्वा एकः चरन् प्रहर्तुं स्वयमेक एव [11]गच्छन् । यद्यपि मरुतः समीपे वर्तन्ते, तथापि ते प्रोत्साहयन्ते, न तु युद्ध प्रहरन्ति । प्रहर्ता तु स्वयमेक एव[11] । धनोः अधि इन्द्रसम्बन्धिनो धनुष उपरि विषुणक् विविध-मायामुद्दिश्य ते वृत्रानुचराः[12] वि आयन् विविधमागच्छन् । आगत्य अयज्वानः यज्ञविरोधिनः सन्तः सनकाः एतन्नामका वृत्रानुचराः प्रेतिम् ईयुः मरणं प्राप्ताः[12] ॥ ४ ॥

परा चिच्छीर्षा ववृजुस्त इन्द्रायज्वानो यज्वभिः स्पर्धमानाः ।
प्र यद् दिवो हरिवः स्थातरुग्र निरव्रताँ अधमो रोदस्योः ॥ ५ ॥

परा । चित् । शीर्षा । ववृजुः । ते । इन्द्र । अयज्वानः । यज्वऽभिः । स्पर्धमानाः । प्र । यत् । दिवः । हरिऽवः । स्थातः । उग्र । निः । अव्रतान् । अधमः । रोदस्योः ॥ ५ ॥

१ नास्ति कु  १ नास्ति ख  ३ नास्ति मूको  ४ ४ °रपेक्ष च सहयोगलक्षणे कु  ५ अनेक क रवि  ६ पर्यन्तसुप° रवि  ७ °पठितमपि मूको  ८ समान्द° रवि ख  ९ प्रसृता वि¹, प्रसृता रूप वि², मुदितम् क, सकाशे वि³  १० नास्ति वि  ११ ११ नास्ति वि मै³  १२ १२ नास्ति मूको

स्कन्द० केन पुनः प्रकारेण प्रेतिमीयुः । उच्यते—चित्[1] 'परा चिद् इति'[2] शब्दः पदपूरणः । शीर्षा स्वानि शिरांसि[3] त्वया छिन्नानि सन्ति[4] परा ववृजुः पराङ्मुखीकृतवन्तः । भूमौ पर्यस्तवन्त इत्यर्थः । हे इन्द्र! अयज्वानः यज्वभिः त्वदाश्रितैः सह स्पर्धमानाः । कदा । उच्यते—प्र यत् । प्रशब्दः अधम इत्याख्यातेन सम्बन्धयितव्यः । यत् यदा दिवः हरिवः स्थातः दिव इत्येतत् स्थातरित्येतेन सम्बन्धयितव्यम् । हे दिवः स्थातः[5] द्युलोकस्याधिष्ठातः[6] हरिवः[7] उग्र । अव्रतान् प्र नि अधमः प्रकर्षेण निरधमः अपकालितवानसि अव्रतान् अकर्मणः अयज्वनः । रोदस्योः द्यावापृथिव्योः सकाशात् । लोकद्वयादपीत्यर्थः । अथवा प्र यद्दिव इति पञ्चम्यर्थे प्रथमा, इन्द्रप्रतिनिर्देशः । अधम इत्यपि लड्यें[8] लङ् । यस्त्वमव्रतानयज्वनः मनुष्यान् द्वयोरपि लोकयोर्निर्धमसि, ■ वर्धीहि दस्युमिति[9] ॥ ५ ॥

वेङ्कट० परा ववृजुः[7] शीर्षाणि ते इन्द्र! आसन्[8] पराङ्मुखाः युद्धात्[10] । अयज्वानः यज्वभिः स्पर्धमानाः । यदा त्वं दिवः स्थापयितः[11] हरिवः! उद्गूर्ण[12] । आजिघ्यया शत्रून् प्रति, अव्रतीनां अयजमानान् तान् द्यावापृथिव्योः नि अधमः ॥ ५ ॥

मुद्गल० हे इन्द्र! ते वृत्रानुचराः शीर्षा स्वकीयानि शिरांसि परा चित् पराङ्मुखान्येव कृत्वा ववृजुः गतवन्तः । कीदृशास्ते । अयज्वानः स्वयं यागरहिताः यज्वभिः यागानुष्ठातृभिः सह स्पर्धमानाः । हे हरिवः हरिनामकाश्वयुक्त! स्थातः स्थितियुक्त! युद्धे पलायनरहित! उग्र! शौर्ययुक्त! इन्द्र! यत् यदा दिवः अन्तरिक्षात् रोदस्योः द्यावापृथिव्योः सकाशाच्च अव्रतान् व्रतरहितान् वृत्रानुचरान् [13]नि प्र अधमः[13] निःशेषेण धमनं कृतवानसि । तदानीं त्वदीयप्रबलवायुना तृणा सन्तो ववृजुरिति पूर्वेणान्वयः ॥ ५ ॥

इति प्रथमाष्टके तृतीयाध्याये प्रथमो वर्गः ॥

अयुयुत्सन्ननवद्यस्य सेनामयातयन्त क्षितयो नवग्वाः ।
वृषायुधो न वध्रयो निरष्टाः प्रवद्भिरिन्द्राच्चितयन्त आयन् ॥ ६ ॥

अयुयुत्सन् । अनवद्यस्य । सेनाम् । अयातयन्त । क्षितयः । नवऽग्वाः । वृषऽयुधः । न । वध्रयः । निःऽअष्टाः । प्रवत्ऽभिः । इन्द्रात् । चितयन्त । आयन् ॥ ६ ॥

स्कन्द० पञ्चपर्वणामिदमयं बहुपद्धशाख्याहार्यम्[14] । ये असुरा अयुयुत्सन् योधयितुमिष्टवन्तः[15] अनवद्यस्य प्रशस्यस्येन्द्रस्य सेनाम्, तान् काश्चित् अयातयन्त यातयतिर्वधकर्मा (द्र निघ २,१९) । स्वार्थिकश्चात्र णिच् हतवन्त । णिजन्तसामर्थ्याद्वा इन्द्रेण घातितवन्तः । के । क्षितयः मनुष्याः । कतमे । नवग्वाः 'अङ्गिरसो नः पितरो नवग्वाः' (ऋ १०,१४,६) इति सामानाधिकरण्यदर्शनादङ्गिरसोऽत्र नवग्वा इत्युच्यन्ते । ते किल तपस्यन्तो नवभिर्मासैः सिद्धिं गताः । ते काश्चिद्यातयन्त । केचित्तु वृषायुधः न वध्रयः निरष्टाः वृषः प्रजननसमर्थो बलवान् वृषभः । तेन सह

1 नास्ति कु 2 2 नास्ति मूको 3 शीर्षाणि कु 4 °प्र यत्शब्द इति, यत्° इ° अ कु 5 स्थातो मूको 6 6 निस्त्यमाद्रि अ° इति, °धष्ठातृ कु 7 °इन्द्र स्यादिति वि° अ° 8 नास्ति वि° अ° 9 पाञ्चमुखा अ°, °मुखे वि° अ° 10 युद्ध कु 11 °पयित इति 12 °° इति 13 13 निष्मन् वि° अ° 14 °ख्याहा° कु 15 °मिष्टवन्त इति°.

स्कन्द० त्वम् एतान् असुरान् मेघान्[1] वा रुदतः जक्षतः च जक्ष भक्षहसनयोः । रुदतो हसतश्च । सर्वास्ववस्थासु वर्तमानानित्यर्थः । अयोधयः योधितवानसि । रजसः लोकनामैतत् ( द्र० या ४।१९ )। अन्तरिक्षलोकस्य द्युलोकस्य वा । हे इन्द्र ! पारे अन्ते अवस्थितान्[2] । भयादन्तरिक्षस्य दिवो वा अन्त्यान्[3] नष्टानपि सतः इत्यर्थः । किञ्च[4] अव अदहः अवशब्दः अधोभागे । दहतिरप्यत्र सामर्थ्यान्निर्धमनार्थे । अधो निरधमः निर्धमासि वा । दिवः द्युलोकात् । आकारस्तु पद पूरणः । [5]दस्युम् शत्रुम्[5] उच्चा उच्चैरप्यवस्थितम् । किञ्च सुन्वतः स्तुवतः च यजमानस्य शंसम् कामम् । प्राव [6]प्रकर्षेण रक्षितवान् तर्पितवान् वाऽसि[6] ॥ ७ ॥

वेङ्कट० त्वम् एतान् असुरान्[7] रुदतः हसतः च पृथिव्याः [8]पारे अन्ते अवस्थितान् योधितवानसि इन्द्र[8] । तदानीम् उच्छ्रितात् दिवः असुरम् अध[10] नीचवानसि[11] । सुन्वतः स्तुवतः च प्रार्थना प्रकर्षेण अरक्ष[12] ॥ ७ ॥

मुद्गल० हे इन्द्र ! त्वम् रुदतः रोदनं कुर्वतः जक्षतः भक्षणं कुर्वतः च एतान् विविधानपि वृत्रानु चरान्[13] रजसः पारे अन्तरिक्षस्य परभागे अयोधयः युद्धमकरोः । युद्धेन मारितवानित्यर्थः । दस्युम् उपक्षपयितारं वृत्रम् दिवः आ द्युलोकादानीय उच्चा उत्कर्षेण अव अदहः बाधितवानसि । वृत्रं सपरिवारं विनाश्य [14]ततः ऊर्ध्वम्[14] सुन्वतः सोमाभिषवं कुर्वतः स्तुवतः [15]स्तोत्रं कुर्वतो[15] यजमानस्य शंसम् स्तुतिम् प्र आवः प्रकर्षेण रक्षितवानसि ॥ ७ ॥

चक्राणासः परीणहं पृथिव्या हिरण्येन मणिना शुम्भमानाः ।
न हिन्वानासस्तितिरुस्त इन्द्रं परि स्पशो अदधात्सूर्येण ॥ ८ ॥

चक्राणासः । परिऽनहम् । पृथिव्याः । हिरण्येन । मणिना । शुम्भमानाः । न । हिन्वानासः । तितिरुः । ते । इन्द्रम् । परि । स्पशः । अदधात् । सूर्येण ॥ ८ ॥

स्कन्द० चक्राणासः कुर्वन्तः परीणहम् पृथिव्याः णह बन्धने । सर्वतो बध्यते येन पृथिवी स पृथिव्याः परिणाहः[16] । सालप्राकारादिकम् । दुर्गाणि कुर्वन्त इत्यर्थः । हिरण्येन मणिना शुम्भमानाः शोभमानाः । [17]किम् । सामर्थ्यात् स्वशरीराणि† । स्वाभिः स्वरक्षाभिधाना आस्थायाभ्याश्च सन्तः इत्यर्थः[17] । न हिन्वानासः तितिरुः ते हिनोतिर्वृद्ध्यर्थः । तिरतिः शक्नोत्यर्थः । शक्नोतेश्च कर्मभूतधात्वन्तरानुपात्तस्य निरपराधात् प्रतियोद्धुमिति वाक्यशेषः । ते इत्यसुराणां प्रतिनिर्देशः । [18]सर्वप्रकारं वर्धमाना असुरा नैवाशक्नुवन् प्रतियोद्धुमित्यर्थः[18] । कम् । इन्द्रम् । कस्मात् । उच्यते । यस्मात् तानुरु

१ नास्ति कु. २ °स्थितवान् अ कु ३ अन्त्यान् कु ४ नास्ति रवि ५-५ दस्यून् शत्रून् अ, दस्युं शत्रून् रवि ६-६ प्रकर्षेण तर्पितवानसि तपयसि वा रवि, प्रकर्षेण अर्पितवान् वेम ७ इमान् अ° वि°. ८-८ पारे योधि° वि° अ° ल रवि, पारे बाधितवानसि कु °स्थितान् योधितवानसि वि° अ° ९ नास्ति अ° १० नास्ति कु रवि ११ °नसि° रवि १२ °रक्ष कु १३ इमान् वि १४-१४ तदनन्तरं मै° वि १५-१५ स्तोत्राणि मै° १६ परिणाह रवि १७-१७ नास्ति कु; कि सामर्थ्यात्स्वशरीरत्र स° अ; कि सामर्थ्यं स्वा° रवि° † नास्ति मूको १८-१८ सर्वप्रकारं वर्धमानाः अ; सर्वा वर्धमानापा कु

परि स्पश अदधात् पर्यदधात् सर्वतो निहितवान् इन्द्र स्पशो बाधकान्[1]। न केवलम् स्वयमेव[2] किं तर्हि। [3]सूर्येण अन्यैरपि देवै सह[3] सम्भन्त्योरयार्थे। यस्माच्चारचक्षुर्मन्त्रशक्तियुक्त इत्यर्थ ॥ ८ ॥

वेङ्कट० कुर्वाणा आच्छादन महत्त्वा पृथिव्या हिरण्मयेन अलङ्कारेण शोभमाना ते इन्द्रम् प्रति गच्छन्त न शीर्णयन्त। सोऽयम्[4] सूर्येण सह परित्त [5]रश्मीन् निहितवान्[5] ॥ ८ ॥

मुद्गल० ये वृत्रानुचरा पृथिव्या भूमे परीणहम् आच्छादन सर्वतो व्याप्तिम् चक्राणास कुर्वाणा हिरण्येन हिरण्मयुक्तन मणिना कण्ठबाह्वादिगतेन मण्याद्याभरणेन शुम्भमाना शोभमाना[6] द्रित्वानास यर्थमाना सन्तो वर्तन्ते, ते[7] तथाविधा वृत्रानुचरा इन्द्रम् युद्धायोद्यन्तम् न तितिर तेतु न समर्था आसन्। तदानीं स इन्द्र स्पश बाधकान् वृत्रानुचरान्[8] सूर्येण आदित्येन परि अदधात् व्यवहितान् अकरोत् ॥ ८ ॥

परि॒ यदि॑न्द्र॒ रोद॑सी उ॒भे अबु॑भोजीर्महि॒ना वि॒श्वत॑ः सीम् ।
अम॑न्यमानाँ अ॒भि मन्य॑मानै॒र्निर्ब्र॒ह्मभि॑रधमो॒ दस्यु॑मिन्द्र ॥ ९ ॥

परि॑ । यत् । इ॒न्द्र॒ । रोद॑सी॒ इति॑ । उ॒भे इति॑ । अबु॑भोजी । म॒हि॒ना । वि॒श्वत॑ । सी॒म् । अम॑न्य-मानान् । अ॒भि । मन्य॑माने । नि । ब्र॒ह्मऽभि॑ । अ॒ध॒म॒ । दस्यु॑म् । इ॒न्द्र॒ ॥ ९ ॥

स्कन्द० यत् इति प्रथमा[9]। व्यत्ययेन तु नपुंसकम्[10]। यदर्थे वा। यत्त्व यस्मात् वा हे इन्द्र! रोदसी उभे परि अबुभोजी भुज पालनाभ्यवहारयो। परिपालयसि भुङ्क्षे वा। महिना महता वीर्येण। विश्वत सर्वत। सीम् इति तु पदपूरण। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्य। स तस्मात् अमन्यमानान् मन्यतिरर्चतिकर्मा (द्र निघ ३,१४)। अस्तुवत अभि मन्यमानै अभिष्टुवद्भि[11]। [11]केन। ब्रह्मभि[12] स्तुत्यर्थ सामलक्षणै। नि अधम धमतिरत्र [13]सामर्थ्यादन्तर्णीतण्यर्थ। ध्मन्तश्चापकार यतेरर्थ[13] वर्तते। तस्मात् स्थानादपकालयसीत्यर्थ[14]। कान्[1]। दस्युम् अमन्यमानानिति बहुवचनसामानाधिकरण्यात् बहुवचनस्य स्थाने इदमेकवचनम्। दस्यून् अनभिष्टुवत[15] शत्रून् हे इन्द्र! इदि परमैश्वर्ये। अत्यन्तेश्वर[1] ॥ ९ ॥

वेङ्कट० इन्द्र! त्व माहात्म्येन आद्यान्[16] शत्रून् हत्वा द्यावापृथिव्यौ उभे[17] अपि सर्वत परि अबुभोजी रि समस्तमभुङ्क्था[18], उदकमिवादितोऽपि[19] अबुभुजत्[20] अमन्यमानान् सम्प्रजन्[20] अभि मन्यमानै मन्त्रैरिव[21] शत्रून्[22] नि अधम ॥ ९ ॥

मुद्गल० हे इन्द्र! यत् यदा रोदसी उभे द्युलोकभूलोकावुभौ महिना त्वदीयेन महिम्ना विश्वत

---

१ दधिकान् क   २ नास्ति मूको   ३ ३ सर्वेण सह अन्यैरपि देवै रवि   ४ तान् वि[1] अ[1]
५ ५ रश्मिभि निहत° वि[1] अ[2], निहित° वि[2]   ६ नास्ति वि   ७ नास्ति वि मं[2]   ८ अनुचरान् मं[2]
९ प्रथमान्त कु अ   १० नपुंसका कु अ   ११ °भिष्टु° रवि[1,2]   १२ १२ नास्ति रवि[1,2]
१३ १३ °त्र अन्तर्णीतण्यर्थ । ध्मन्तश्चापि काक° अ कु   १४ °दयस° कु   १५ अभिष्टु° मूको
१६ अन्यान् वि[1] अ[2] कु रवि   १७ उभौ वि[1] अ[2]   १८ °भुङ्क्था ए वि[1] अ[1] कु, °भुङ्क्था वि[1] अ[1]
१९ ना प्रकर्षेण एव तदा° वि[1] रुप   २० २० °मान आख्यान् वि[1] अ[2]   २१ °रिवा वि[1] रुप
२२ शत्रु कु अ[1], शत्रु त अ[2], दस्यु शत्रु त वि[1]

सीम् सर्वत परिगृह्य परि अनुभोनी परितो मुक्तवानसि । तदानीं त्वम् अमन्यमानान् मन्त्रार्थं अनुध्यातुमशक्तानपि केवलपाठकान् यजमानान् अभि मन्यमानै अस्मदीया एते यजमाना रक्षणीया इति अभिमानं कुर्वद्भि कभि मन्त्रै दस्युम् चोर वृत्रादिरूपमसुरम् नि अधम नि सारितवानसि ॥९॥

न ये दिवः पृथिव्या अन्तमापुर्न मायाभिर्धनदां पर्यभूवन् ।
युजं वज्रं वृषभश्चक्र इन्द्रो निर्ज्योतिषा तमसो गा अदुक्षत् ॥ १० ॥

न । ये । दिव । पृथिव्या । अन्तम् । आपु । न । मायाभि । धनऽदाम् । परिऽअभूवन् ।
युजम् । वज्रम् । वृषभ । चक्रे । इन्द्र । नि । ज्योतिषा । तमस । गा । अधुक्षत् ॥ १० ॥

स्कन्द ये वादि असुरा दिव पृथिव्या च अन्तम् न आपु न प्राप्नुवन्ति । द्यावापृथिव्योरेकदेशवर्तिन इत्यर्थ । न अपि मायाभि प्रज्ञाभि धनदाम् इन्द्रम्[1] पर्यभूवन् परिभवन्ति । इन्द्रात् 'प्रज्ञया न्यूना'[2] इत्यर्थ । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्य । तैरपि सह युजम् सम्बद्धम् वज्रम्[3] वृषभ वर्षिता चक्रे इन्द्र । तानपि वज्रेण हतवानित्यर्थ । हत्वा च ज्योतिषा सौरेण वैद्युतेन वा[4] तमस यत्र गुहादौ तमोरूपे[5] स्थापितास्तत्तेषामसुराणा[6] स्वभूता गा नि अधुक्षत् निर्दुग्धवान्[7] निष्कासितवानित्यर्थ[8] । अथवा ये इति मेघाना प्रतिनिर्देश । 'गा अधुक्षद्' इत्यपि गोशब्द उदकनामा । येऽपि[9] मेघा द्यावापृथिव्योरेकदेशवर्तिन इन्द्राच्च न्यूनप्रज्ञास्तानपि वज्रेण हतवान् । हत्वा च वैद्युतेन ज्योतिषा तदीयात् तमस अपो निरधुक्षत् पातितवान् ॥ १० ॥

वेङ्कट० ये अपि दिव पृथिव्या अन्तम् न आपु । न[10] कर्मभि धनस्य दातारमिन्द्र परितोऽभवन् । तासा[11] वधार्थं सहायम् वज्रम् वर्षिता इन्द्र चक्रे । तत ज्योतिषा गा अप[12] तमस मेघात्[13] नि अधुक्षत् दस्यु हत्वेति ॥ १० ॥

मुद्गल० ये अल्पविशेषा [14]"दिव द्युलोकात्"[14] पृथिव्या अन्तम् [15]"भूमे स्थानम्"[15] न आपु प्राप्ता । अपरूपमापत्तेन धूम्रेण निस्सृतत्वात् । अत एव भूमिप्राप्त्यभावात् धनदाम् धनप्रदा भूमिम् मायाभि सस्योपकारादिभि कर्मभि न पर्यभूवन् परितो न व्याप्ता । अल्पानसस्याभिवृद्धयाद्युपकारा न चक्रुरित्यर्थ । तदानीमयम् इन्द्र वृषभ कामाना वर्षिता मेघमेवलाय वज्रम् युजम् स्वहस्तयुक्तम् चक्र । तत ज्योतिषा [16]द्योतमानेन वज्रेण तमस अन्धकाररूपात् मेघात् गा गमनशीलान्युदकानि नि अधुक्षत् नि शेषेण दुग्धवान् । मेघं भित्त्वा जल वृष्टवानित्यर्थ[16] ॥ १० ॥

इति प्रथमाष्टके तृतीयाध्याये द्वितीयो वर्ग ।

अनु स्वधामक्षरन्नापो अस्यावर्धत मध्य आ नाव्यानाम् ।
सध्रीचीनेन मनसा तमिन्द्र ओजिष्ठेन हन्मनाहन्नभि द्यून् ॥ ११ ॥

---

१-१ नास्ति द्वि. २-२ न्यूनप्रज्ञा भ कु. ३ नास्ति रवि. ४ च भ कु. ५ °रोष मूको. ६ 'स्थापिता°' कु रवि. ७ निर्दु° मूको. ८ निष्कासि° रवि. ९-९ नास्ति भ कु. १० न वि° भ°. ११ तेषाम् मूको. १२ अप वि°. १३ मेघात् कु भ°. १४-१४ द्युलोक वि° भ°. १५-१५ 'भूस्थानं भ°' वि. १६-१६ नास्ति वि.

अनु । स्वधाम् । अक्षरन् । आपः । अस्य । अवर्धत । मध्ये । आ । नाव्यानाम् । सध्रीचीनेन । मनसा । तम् । इन्द्रः । ओजिष्ठेन । हन्मना । अहन् । अभि । द्यून् ॥ ११ ॥

स्कन्द० अनुशब्दो लक्षणे कर्मप्रवचनीयः । 'स्वधा' ( निघ १,१२ ) इति उदकनाम । यत् पूर्वपतितमुदकं तत् प्रति अक्षरन् क्षरितवत्यः क्षरन्ति वा आपः अस्य इन्द्रस्य स्वभूताः प्रसादेन वा । 'अनुपक्षीणायामेव पूर्ववृष्टौ पुनरपि अवर्षन् वर्षितव्या इत्यर्थः[1] । अथवा[2] अन्विति पश्चाद्भावे । 'स्वधा' ( निघ २,७ ) इत्यन्ननाम । अस्येत्येतच्च स्वधाम् इत्यनेन सम्बध्यते । अस्य इन्द्रस्य[3] स्वभूतं हविर्लक्षणं स्वधामनु तदीयस्य हविषः पश्चात् । यदाऽस्मै हविर्दीयते तदाऽऽपोऽक्षरन्नित्यर्थः । अक्षरन्[4] । किमक्षरन् । आपो वृष्टिलक्षणाः । कथं पुनर्मेघेन निरुद्धाः सत्योऽक्षरन् । अवर्धत मध्ये आ आ इत्येषः अवेत्येतस्य[5] स्थाने । सध्रीचीनेन मनसा तम् इति तच्छब्दात् यच्छब्दोऽत्राध्याहार्यः । यो मेघो वृष्टिनिरोधाभिप्रायेणावर्धत मध्येऽवस्थितानामपाम् अव[6] अध. । कियतीनाम् । नाव्यानाम् नावा तार्याणाम् । अत्यन्तबह्वीनामित्यर्थः । सध्रीचीनेन सह अञ्चति गच्छतीति "सध्रीचीनो वज्र. तेन सध्रीचीनेन" सहगामिना वज्रेण । केन सहगामिना । मनसा । यत्रैव मनो गच्छति तत्रैव गन्त्रा । यत्र मनसा इष्यते तत्र निपततेत्यर्थ. । तं मेघम् इन्द्रः । कीदृशेन वज्रेण । ओजिष्ठेन बलवत्तमेन हन्मना हन्त्रा मेघानाम् । अहन् हतवान् । अभि द्यून् दिवसान् प्रति । येषु वार्षिकेष्वहस्सु हन्तुं योग्यस्तेष्वित्यर्थः ॥ ११ ॥

वेङ्कट० वृत्रे हते इन्द्रस्य 'आपः स्वधाम् अनु अक्षरन्'[8] । अयमिन्द्रो नावा तार्याणामपाम्[9] मध्ये अवर्धत । सहायभूतेनानुगुणेन एतेन मनसा बलवत्तमेन हननसाधनेन[10] हतवान् असुरं "दिवसेषु तेष्विति"[11] ॥११॥

मुद्गल० आपः जलानि अस्य इन्द्रस्य स्वधाम् अन्नं व्रीह्यादिरूपम् अनु[7] अनुलक्ष्य अक्षरन् मेघाद् वृष्टा अभवन् । तदानीमयं वृत्रः नाव्यानाम् नावा तरणयोग्यानां बह्वीनाम् अपाम् मध्ये आ समन्तात् अवर्धत वृद्धिं प्राप्त. । प्रभूतजले वर्तमानोऽपि न ममार, किन्तु अभिवृद्ध एव । तदानीम् इन्द्रः सध्रीचीनेन सह गच्छता मनसा युक्तम् तम् वृत्रम् ओजिष्ठेन अतिशयबलयुक्तेन हन्मना हननसाधनेन वज्रेण अभि द्यून् कतिचिद्दिवसान् अभिलक्ष्य अहन् तेषु दिवसेषु हतवान् । जलमध्ये पतितस्यापि वृत्रस्य मनो यत्रेन्द्रस्तिष्ठति तत्रैव सह गच्छति तादृशमभिप्राय हतवानित्यर्थ. ॥ ११ ॥

न्यांविध्यदिलीबिशस्य दृळ्हा वि शृङ्गिणमभिनच्छुष्णमिन्द्रः ।
यावत्तरो मघवन् यावदोजो वज्रेण शत्रुमवधीः पृतन्युम् ॥ १२ ॥

---

१-१. "यो मेघपूर्वस्थे पुनरपि (अवर्षत?) वर्षति स्म इत्यर्थः रवि. २. नास्ति रवि[2,1] कु. ३. नास्ति रवि. ४. नास्ति मूको. ५. अपेत्येतस्य अ कु. ६. एव अ कु. ७-७. नास्ति अ कु. ८-८. स्वभूता आपः वृष्टिलक्षणा आपः स्वधा वृष्टिलक्षणाम् अन्वक्षरन् वि[1] अ[1]; "आपः स्वसारम् अक्षरन् लः, आपः स्वसारम् मधु अक्षरन् रवि. ९. तार्यमाणानाम्" रवि. १०. तथानुगामिना मनसा यत्र मनोऽनुगच्छति 'तत्र गन्त्रा तेन वज्रेण हननं' वि[1] अ[1]. ११. "षु वार्षिकेषु ते" वि[1] अ[1]; दिवसेष्विति रवि.

नि । अविध्यत् । इलीबिशस्य । दृळ्हा । वि । शृङ्गिणम् । अभिनत् । शुष्णम् । इन्द्रः । यावत् । तरः । मघवन् । यावत् । ओजः । वज्रेण । शत्रुम् । अवधीः । पृतन्युम् ॥ १२ ॥

स्कन्द० कस्य चित् तावत्[1] नि अविध्यत् निष्कृष्य विद्धवान् । कस्य । इलीबिशस्य इलीबिशो मेघः । कथम् । 'इळा' (निघ २,७) इति अन्ननाम । बिशशब्दो बिस्यते । 'बिस्यतिश्च भेदनकर्मा' वृद्धिकर्मा वा । [illegible] आह— 'बिस बिस्यतेर्भेदनकर्मणो वृद्धिकर्मणो वा' ( या २ २४ ) इति । अथवा 'बिस्यति, विस्यति, मिस्यति' ( निघ २,१४ ) इति गतिकर्मसु पाठात् बिस्यतिर्गत्यर्थः[1] । बीजरूपमन्नमुद्भिन्नति वर्धयति उदकरूपो वा भूत्वा[2] गच्छतीति इळाबिस । इळाबिस सन्निलीबिश उच्यते । छान्दस ईकार शकारश्च । अथवा इळाशब्दोऽन्नहेतुत्वादुदके वर्तते । बिशशब्दोऽप्येकदेशलोपेन बिलशय शब्दस्यार्थे । अन्नहेतोरुदकस्य बिलेषु शेते सान्यप्यावृत्य[3] तिष्ठतीति इलीबिशो मेघः तस्य । दृळ्हा दृढानि दुर्भेद्यानि[4] । कानि । सामर्थ्यात् उदकनिर्गमनबिलानि । कश्चित्तु शृङ्गिणम् दीप्तिमन्त[5] मेघम् वि अभिनत् विविधं भिन्नवान् । विदारितवानित्यर्थः । कीदृशम्[6] । शुष्णम् बलनामैतत् ( निघ २,९ ) । सामर्थ्याच्चात्र तद्वानित्यर्थः । बलवन्तम् । कः । इन्द्रः । कस्यचिन्मेघस्य बिलान्युद्घाटितवान् । कश्चित्तु शातयाञ्चकार[7] भस्मसात्कृतवानित्यर्थः । अथवा 'शुष्ण पिप्रुं कुयवं वृत्रम्' ( ऋ १,१०३,८ ) इत्यादिषु दर्शनात् शुष्णो नामासुरः । तं विविधं भिन्नवान् विदारितवान् मारितवान्[8] इत्यर्थः । शुष्ण-सम्बन्धाच्च इलीबिशोऽप्यसुर एव । तस्य स्वभूतानि दृढानि पुराणि निरविध्यत् । व्यध ताडने । निर्भिद्य[9] ताडितवान् । हतवानित्यर्थः । परोऽर्धर्चः प्रत्यक्षकृतो भिन्नं वाक्यं पूर्वस्मादर्धर्चात् । यावत् तरः शरीरसामर्थ्यलक्षणं बलम् हे मघवन् ! धनवन्[10] । यावत् च ओजः सेना लक्षणं बलम् । यावदित्युद्देशात् [11]तावदित्यध्याहार्यम् । तावता सर्वेण युक्तस्त्वम्[11] । वज्रेण शत्रुम् अवधीः अस्मदीयं वा जहि पृतन्युम् सङ्ग्रामकामम् ॥ १२ ॥

वेङ्कट० नि अविध्यत् उदकस्य निर्गमनद्वारमावृत्य शयानस्य दृढानि द्वाराणि मेघस्य[11] । तेजस्विनं शुष्णासुरम् वि अभिनत् इन्द्रः । यावत् वेगः यावत् च बलम् मघवन्[12] तत् सर्वमादाय युद्धकामम् शत्रुम् शुष्णम् अवधीः ॥ १२ ॥

मुद्गल० इलीबिशस्य इळाया भूमेर्बिले शयानस्य वृत्रस्य सम्बन्धीनि दृळ्हा दृढानि असुरेण निरुद्धानि प्रभूतानि उदकानि इन्द्रः नि अविध्यत् नितरां विद्धवान् । तत ऊर्ध्वं शृङ्गिणम् गोम हिम्यादिशृङ्गयमानैः आयुधैर्युक्तम् शुष्णम् जगतः शोषकं वृत्रम् वि अभिनत् विविधं ताडित-वान् । हे मघवन् ! इन्द्र ! तव यावत् तरः यावद्वेगोऽस्ति यावत् ओजः यावद् बलमस्ति तेन सर्वेण युक्तस्त्वम् पृतन्युम् पृतना युद्धमिच्छन्तम् शत्रुम् वृत्रम् वज्रेण अवधीः हतवान् ॥ १२ ॥

अभि सिध्मो अजिगादस्य शत्रून् वि तिग्मेन वृषभेणा पुरोऽभेत् ।
सं वज्रेणासृजद् वृत्रमिन्द्रः प्र स्वां मतिमतिरच्छाशदानः ॥ १३ ॥

---

1 तावद् रवि   २ २ °निर्भेद° रवि   ३ °गतिकर्मा [illegible]   ४ नास्ति भ कु   ५. °रूपि भूत्वा° कु   ६ दुर्भेद्यानि वि कु, दुर्भेदानि रवि[11]   ७ दीप्त भ कु   ८ शातं शातयाञ्चकार कु   ९ नास्ति भ कु   १० निर्भिद्य कु निर्भिद्य भ   ११-११ तावदित्यध्याहार्यं । (रवि) तेन सर्वेण युक्तो   १२ °स्य इति निरुद्धेनोदकस्य द्वाराणि पुराणि निर्भिद्य ताडितवान् हतवानित्यर्थः तेजः वि[1] अ[2]   १३. मघवन् कु

अभि । सिध्मः । अजिगात् । अस्य । शत्रून् । वि । तिग्मेन । वृषभेण । पुरः । अभेत् । सम् । वज्रेण । असृजत् । वृत्रम् । इन्द्रः । प्र । स्वाम् । मतिम् । अतिरत् । शाशदानः ॥ १३ ॥

स्कन्द० सिध्मः साधयितेन्द्रः अभि अजिगात् अभिगतवान् । किम् । अस्य एवेन्द्रस्य शत्रून् । अथवा सिध्म इति वज्र उच्यते । साधयिता वज्रः अभ्यजिगादस्येन्द्रस्य शत्रून् । [1]अभिगतेन च तेन वज्रेण[1] तिग्मेन तीक्ष्णे[2] वृषभेण वर्षित्रा तेषां शत्रूणां स्वभूताः पुरः नगराणि वि अभेत् विविधं भिन्नवान् । विनाशितवानित्यर्थः । किञ्च सम् वज्रेण असृजत् समसृजत् संसर्जितवान्[3] । सम्बन्धितवानित्यर्थः । कम् । वृत्रम् असुरम् । कः । इन्द्रः । प्र स्वाम् मतिम् अतिरत् मतिमिति मन्यतेरर्चतिकर्मणो रूपम् । अतिरदित्यपि तिरतिर्वृद्ध्यर्थः । आत्मीयां स्तुतिं प्रकर्षेणावर्धयत् । शाशदानः पुनःपुनरसुरान् असुराणि च शातयन् । [4]यो हीत्थं[4] कर्म पुनःपुनः करोति स [5]तत्कर्मसम्बद्धा आत्मीयस्तुतीः[5] वर्धयति । अथवा मतिरिति प्रज्ञैवोच्यते । स्वप्रज्ञामवर्धयदिति । यो हि दक्षित्वं करोति तस्य तत्र प्रज्ञाकौशलं वर्धते[6] ॥ १३ ॥

वेङ्कट० साधयिता कर्मणामिन्द्रः अस्य शुष्णस्य शातयितव्यान्[7] सहायान् अभि अजिगात्, वि अभिनच्च वज्रेण कामानां वर्षित्रा पुराणि । [8]वज्रेण वृत्रम्[8] सम् अयोजयत् इन्द्रः । अवर्धयत्[9] स्वाम् मतिम् असुरपुराणि शातयन्[10] ॥ १३ ॥

मुद्गल० अस्य इन्द्रस्य सिध्मः साधको वज्रः शत्रून् अभि इन्द्रवैरिणोऽभिलक्ष्य अजिगात् गतवान् । स च इन्द्रः तिग्मेन तीक्ष्णेन वृषभेण श्रेष्ठेन आयुधेन तेन वज्रेण पुरः वृत्रस्य पुराणि वि अभेत् विविधं भिन्नवान् । ततः स इन्द्रः वज्रेण स्वकीयेन वृत्रम् सम् असृजत् संयोजितवान्, संयोज्य च शाशदानः वृत्रं हिंसन् स्वाम् मतिम् स्वकीयां हर्षोपेताम् बुद्धिम् प्र अतिरत् प्रकर्षेण वर्धितवान् ॥१३॥

आवः कुत्समिन्द्र यस्मिञ्चाकन् प्रावो युध्यन्तं वृषभं दशद्युम् ।
शफच्युतो रेणुर्नक्षत द्यामुच्छ्वैत्रेयो नृषाह्याय तस्थौ ॥ १४ ॥

आवः । कुत्सम् । इन्द्र । यस्मिन् । चाकन् । प्र । आवः । युध्यन्तम् । वृषभम् । दशऽद्युम् । शफऽच्युतः । रेणुः । नक्षत । द्याम् । उत् । श्वैत्रेयः । नृऽसह्याय । तस्थौ ॥ १४ ॥

स्कन्द० आवः [11]कुत्सम् आरक्षत्वं कुत्सनामानम् ऋषिम्[11] । यस्मिन् कुत्से यागं कुर्वति चाकन् कामितवानसि सोमं स्तुतीश्च[12] । न च केवलं कुत्सम् । किं तर्हि । प्र आवः प्रकर्षेणारक्षः युध्यन्तम् युध्यमानम् [13]वृषभम् नामातो[13] राजानम् दशद्युम् बहुदीप्तिम् । केन प्रकारेण । उच्यते । शफच्युतः [14]शफेभ्यः प्रच्युतः रेणुः[14] पांसुः नक्षत नक्षतिर्व्याप्तिकर्मा[15] व्याप्तिकर्मा वा । व्याप्तवान् व्याप्तवान्

---

१-१. °गेन वज्रेण कु. °गतेन च वज्रेण रवि. २. तीक्ष्णेन च कु. ३. द्र. स्क. [ या ६,१९ ], वेङ्. ४-४. य ईदृशं कु. ५. °तत्कर्म आत्मीयस्तु° अ कु. ६. वर्धते रवि. ७. शातयि° अ° वि°. ८-८. वृत्रेण वज्रं च वि° वृत्रं वि° अ°; वृत्रं च वज्रेण कु रवि. ९. °वर्धयत् कु. अ° वि°; वर्धयन् वि° वृत्रं वि° अ°. १०. शातयन् अ° वि°. ११-११. कुत्सं कुत्सं नाम ऋषिम् कु; नास्ति अ. † नास्ति रवि. १२. स्तुतीं च कु, स्तुतीश्च अ. १३-१३. वृषभनामानं अ कु. १४. शफच्युतो रेणुः कु, शफच्युतो रेणुः रवि. अ. १५-१५. °नक्षत्यो रवि.

वा द्याम् द्युलोकम् । तत् श्वैत्रेयः उच्चन्द्रः तस्थौ इत्याख्यातेन सम्बन्धयितव्यः । 'क्षु' (निघ २,१५) इति क्षिप्रनाम । इण् गतौ । क्षु इत्रा श्वित्रा आशुगामिनी जगतः प्रकृतिः । तस्या अपत्यं श्वैत्रेयो वायुः । स च[2] तृणाह्वाय शत्रुमनुष्याभिभवनाय उत्तस्थौ उत्थितः । शत्र्वभिभवार्थं[3] युद्धवेलायां महान्तं रेणुं वात्याश्च[3] अकरोदित्यर्थः ॥ १४ ॥

वेङ्कट० रक्षितवानसि कुत्सम् इन्द्र! । यस्मिन् कुत्से स्तुतीः[4] कामितवानसि प्र आवः च युध्यन्तम् स्तुतीनां वर्धितारम् [5]दशद्युम् नाम[5] । युद्धे शफैश्च्युतः रेणुः अन्तरिक्षम्[6] नक्षत[7] । प्रवृद्धम्[8] आसीद् युद्धम्[8] । अथ श्वित्रायाः पुत्रो दशद्युस्त्वयोपरक्षितः शत्रूणामभिभवाय कस्मिंश्चिद् ह्रदे भयात्[9] प्रविष्टस्ततः उत्तस्थौ । अस्योत्तरा भूयसे निर्वचनाय 'आवः शमम्' इति ॥ १४ ॥

मुद्गल० हे इन्द्र! कुत्सम् एतन्नामकं गोत्रप्रवर्तकम् ऋषिम् आवः रक्षितवानसि । यस्मिन् कुत्से याचन् स्तुतिं कामयमानः वर्तसे, तं कुत्समिति पूर्वेणान्वयः । तथा दशद्युम् एतन्नामकं दशसु दिक्षु दीप्यमानमृषिम् प्र आवः प्रकर्षेण रक्षितवानसि । कीदृशम् । युध्यन्तम् स्वकीयैः शत्रुभिः सह युद्धं कुर्वन्तम् वृषभम् गुणैः श्रेष्ठम् । शफच्युतः त्वदीयाश्वस्य शफात् पतितः रेणुः धूलिः द्याम् द्युलोकम् नक्षत प्राप्नोति । श्वैत्रेयः श्वित्राख्याया योषितः पुत्रः पुरा शत्रुभयाज्जले मग्नः सन् त्वदनुग्रहात् तृणाह्वाय नृभिः पुरुषैः सोढव्याय उत् तस्थौ जलादुत्थितवान्[1] ॥१४॥

आवः शमं वृषभं तुग्र्यासु क्षेत्रजेषे मघवञ्छ्वित्र्यं गाम् ।
ज्योक् चिदत्र तस्थिवांसो अक्रञ्छत्रूयतामधरा वेदनाकः ॥ १५ ॥

आवः । शमम् । वृषभम् । तुग्र्यासु । क्षेत्रऽजेषे । मघऽवन् । श्वित्र्यम् । गाम् । ज्योक् । चित् । अत्र । तस्थिऽवांसः । अक्रन् । शत्रुऽयताम् । अधरा । वेदना । अकः ॥ १५ ॥

स्कन्द० आवः शमम् शमनामकम् वृषभम् नाम राजानम् तुग्र्यासु 'तुग्र्या' (निघ १,१२) इति उदकनाम । सप्तमीनिर्देशाच्च[11] स्थितमिति वाक्यशेषः । अप्सु स्थितम् । अद्भ्य उत्तारितवानसीत्यर्थः । किमर्थम्[12] । क्षेत्रजेषे क्षेत्रशब्देनात्रैकदेशवचनेन समस्ता पृथिवी लक्ष्यते । पृथिवीजयाय । अद्भ्य उत्तारितः[13] पृथिवीं जेष्यतीत्येवमर्थम् । हे मघवन्! । कीदृशम् । श्वित्र्यम् गाम् गन्तारं देशान् शत्रून् वा प्रति । ज्योक् चित् ज्योगिति चिरकालाभिवचनः । चिच्छब्दः पदपूरणः । एक-वाक्यतासिद्ध्यर्थं यच्छब्दोऽत्राध्याहार्यः । यं वृषभं चिरम् अत्र पृथिव्याम् तस्थिवांसः स्थिताः प्रतिष्ठितास्तच्छत्रवोऽसुरा वा अक्रन् । करोतिरिह क्रियासामान्यवचनः सामर्थ्यात् प्रक्षेपणे[13] वर्तते । अप्सु प्रक्षिप्तवन्तः[14] । यं पृथिव्यां [15]चिरं प्रतिष्ठिता अपि सन्तः[15] शत्रवोऽसुरा वा राज्योच्छेदनभयादप्सु[16] प्रक्षिप्तवन्त इत्यर्थः । उत्तार्य च शत्रूयताम् शत्रुभावं कामयमानानां तेषां यानि स्वभूतानि वेदनानि अपठितमपि धननामैतत् । धनानि तानि अधरा अधराणि [17]"तस्य अधोवर्तीनि"[17] अकः कृतवानसि । शत्रुधनानि तस्यायत्तान्यकरोरित्यर्थः[18] ॥ १५ ॥

---

१. नास्ति कु. २. शत्रुन् अभिभवनार्थं कु. ३. वात्यां च कु. ४. स्तुतिं वि[1] अ[1] एवं. ५-५ दशद्युम्नामानम् वि[1] अ[1]. ६. °रिक्षे कु. ७. नक्षत् कु; व्याप्नोत् नक्ष° वि[1] अ[1]. ८. वृद्ध वि[1] एवं ९. भयात् वि[1] अ[1]. १०. नास्ति वि. ११. °निर्देशात् कु. १२. °र्थमो कु. १३. °पेणे कु. १४. °न्त° कु. १५-१५. चिरप्रतिष्ठिता अपि सन्तः कु; चिरप्रतिष्ठिता अपि सन्तः क. १६. °भयादप्सु कु. १७-१७. नास्ति वि. १८. °करोदि मूको.

वेङ्कट॰ बलाभावाच्छान्तम्[1] वृषभम्[2] उदकेषु भयाद् गतम् पृथिवीजयार्थं [3]त्रिजाया अपत्यं[3] दशद्युम् आवः । चिरं[4] तस्मिन्[4] स्थिताः शत्रवः कृतवन्तो युद्धम्[4] । अथ तेषां शत्रुत्वमिच्छताम् [5]उपद्रवाणि अधराणि चकारेति[5] ॥ १५ ॥

मुद्गल॰ हे मघवन्! धनवन्! इन्द्र! श्वित्र्यम् श्वित्रायाः पुत्रं पूर्वोक्तं पुरुषम् आवः रक्षितवानसि । किमर्थम् । क्षेत्रजेषे शत्रुभिः सह युद्धवेलायां क्षेत्रप्राप्त्यर्थम् । कीदृशम् । शमम् [6]त्वदीयपरिपालनेन चित्तव्याकुलतां परित्यज्य शान्तम् वृषभम् गुणैः श्रेष्ठम् तुग्र्यासु गाम् जलेषु गतं मग्नमित्यर्थः । अत्र अस्माभिः सह युधे युद्धे ज्योक् चित् चिरकालमपि तस्थिवांसः अवस्थिताः सन्तः अक्रन् वैरिणः शत्रुत्वमकुर्वन् । शत्रूयताम् शत्रून् आत्मन इच्छतां तेषाम् अधरा वेदना निकृष्टानि दुःखानि त्वम् अकः कुरु ॥ १५ ॥

इति प्रथमाष्टके तृतीयाध्याये तृतीयो वर्गः ।

[ ३४ ]

त्रिश्चिन्नो अद्या भवतं नवेदसा विभुर्वां याम उत रातिरश्विना ।
युवोर्हि यन्त्रं हिम्येव वाससोऽभ्यायंसेन्या भवतं मनीषिभिः ॥ १ ॥

त्रिः । चित् । नः । अद्य । भवतम् । नवेदसा । विऽभुः । वाम् । यामः । उत । रातिः । अश्विना । युवोः । हि । यन्त्रम् । हिम्याऽइव । वाससः । अभिऽआयंसेन्या । भवतम् । मनीषिऽभिः ॥

स्कन्द॰ 'तत आश्विनम्' । ये एते ऐन्द्रे सूक्ते उक्ते, ताभ्यां परमिदमाश्विनम् । त्रिः चित् त्रिःशब्दोऽत्र सर्वत्र त्रित्वस्य बहुत्वमात्रप्रतिपत्त्यर्थत्वात् बहुकृत्वः इत्यस्यार्थे । बहुकृत्वः । चिच्छब्दस्तु पदपूरणः । नः अस्मान् अद्य भवतम् भवतिरिह प्राप्त्यर्थः । प्राप्नुतम् । हे नवेदसा! । मेधाविनौ! बहुकृत्वोऽद्यास्मत्समीपमागच्छतमित्यर्थः[10] । [11]किं कारणम् । उच्यते । यस्मात् विभुः गमनसमर्थः[11] । याम् युवयोः यामः याम्यंतेनेति यामो रथ इहोच्यते । 'अत्र वीळो वीळित वीळयस्व ... यामादस्मादव जीहिपो नः' ( ऋ ३,५३,१९ ) इति यथा । उत राति: उतशब्दोऽप्यर्थे । [12]रातिशब्दोऽपि कर्मसाधनो देयवचनः[12] । देयमपि विभु हे अश्विनौ! यदागत्यास्मभ्यं धनं दास्यथः तदपि प्रभूतमित्यर्थः । युवोः हि यन्त्रम् हिशब्दो यस्मादर्थे । यस्माच्च युवयोः स्वभूतं यन्त्रमपि विभु । येन यन्त्रेण युवां[13] शत्रून् हथः, तदपि सर्वगमनप्रतिबन्धकम् । हिम्येव वाससः अभ्यायंसेन्या भवतम् 'हिमा' (निघ १,७) इति रात्रिनाम । तत्र भवा हिम्या उषाः । वास इत्यपठितमप्यह्नां नाम । 'आदात्री वासस्तनुते सिमस्मै' ( ऋ १,११५,४ ) इति यथा । अभ्यायंसेन्येत्यभ्याङ्पूर्वस्य यंसेन्यशब्दस्य[14] कर्तरि प्रत्ययः । यथा उषाः

1. बलेनशान्तं रवि. 2. धर्मं नाम शान्तम् वि[1] अ[2]. 3-3. श्वित्रायाः वि[1] अपं. 4. चिरात् वि[1]-अपं; चिरं गां गच्छन्तं शत्रुं देवाव वि[1], चिरं गां गच्छन्तं देवाव तस्थिवांसः अ[2]. 5. नास्ति अ[1]. 6. युद्ध कामुकीकृतस्य उपायं च वि[1] अ[1]. 7-7. उपद्रवाणि अधराणि च कर्मणि वि[1] अ[1]. 8-8. येनाय व्याकुलतां वि. 9. त्रि॰ मूको. 10. इत्येतस्य्म॰ कु. 11-11. नास्ति कु. 12-12. शब्दोऽपि देव॰ कु; शब्दोऽपि कर्मण्येव॰ अ. 13. युवामपि कु. 14. सेन्य॰ रवि, सेन्य॰ कु अ; वैप १,१८०१ ८ ह.

स्कन्द० [1]कीदृशा यूयम्। उच्यते[1]। येषाम् युष्माकम् अज्मेषु अज गतिक्षेपणयोः। गमनेषु। पृथिवी जुजुर्वान् इव विश्पतिः। पुत्रपौत्रादीनां मनुष्याणां पतिः विश्पतिः। कुलज्येष्ठोऽत्राभिप्रेतः, न राजा। यथा जीर्णोऽत्यन्तवृद्धः। भिया भयेन रेजते कम्पते। यामेषु इत्येतत्तु अज्मेषु इत्येतेन सम्बन्धयितव्यम्। तृतीयार्थे चात्र सप्तमी। यामैः रथैः अज्मेष्विति। येषु युष्मासु रथैर्गच्छत्सु कम्प्येते इत्युं गच्छन्तीत्यजानती पृथिव्यपि भयेन कम्पते। किमुत अन्ये इत्यर्थः। अथवा येषामित्येतत् भियेत्येतेन सम्बन्धयितव्यम्। तत्सम्बन्धे च 'भीत्रार्थानाम्' (पा १,४,२५) इत्यपादान-त्वात्[2] पञ्चम्यर्थे षष्ठी। अज्मेषु इत्यप्यज्मशब्दो गृहनाम (तु निघ ३,४)। अज्मेषु[3] यामे[4]ष्वित्येतच्च[4] समुच्चीयमानार्थे [5]एते। सप्तमीनिर्देशाच्च[6] योग्यक्रियाध्याहारः। येभ्यो युष्मत्[6] अज्मेषु यामेषु [7]च गृहेषु रथेषु च[7] व्यवस्थितेभ्यः भिया भयेन पृथिवी रेजत इति। येभ्यः स्वस्थेभ्यश्चासीनेभ्यो युद्धाभिमुखेभ्यश्च भयेन पृथिवी कम्पत इत्यर्थः। 'तेषां वो यामाय मानुषः' इत्येवं तच्छब्दश्रुतेः पूर्वया ऋचैकवाक्यता परया वा ॥ ८ ॥

वेङ्कट० येषाम् उत्क्षेपकेषु[1] गमनेषु पृथिवी ओषधिवनस्पतियुक्ता, [1]"जीर्णः राजेव परबलागमने,"[1] कम्पते भिया। पूर्वत्र सम्बन्धः ॥ ८ ॥

मुद्गल० हे मरुतः[11] येषाम् युष्माकम् यामेषु गमनेषु अज्मेषु क्षेपकेषु सत्सु पृथिवी भूमिः भिया रेजते कम्पते। दृष्टान्तः। जुजुर्वान् इव विश्पतिः। यथा वयोहानिरोगादिना जीर्णः प्रजापालको राजा वैरिभयात् कम्पते तद्वत् ॥ ८ ॥

स्थिरं हि जानमेषां वयो मातुर्निरेतवे। यत् सीमनु द्विता शवः ॥ ९ ॥

स्थिरम्। हि। जानम्। एषाम्। वयः। मातुः। निःऽएतवे। यत्। सीम्। अनु। द्विता। शवः ॥ ९ ॥

स्कन्द० हिशब्दः पदपूरणः। येषाम् अज्मेषु[11] येभ्यो वा भिया पृथिवी रेजते, तेषाम् एषाम् मरुताम् स्थिरम् जानम् जन्म वयः च यौवनलक्षणम्। यथा [12]"मनुष्याः जाताः[12] शीघ्रमेव [13]"वृद्धी-भवन्ति म्रियन्ते[13] च, न तद्वत् ते[14] मरुतः इत्यर्थः। किमर्थम्। उच्यते। मातुः निरेतवे। मातुः सका-शात् निर्गन्तुम्। मातुरुदरे पुनःपुनर्गर्भवासमननुभवितुमित्यर्थः। यो हि [15]"वृद्धीभवति म्रियते"[15] च, तेनावश्यं मातुरुदरे पुनःपुनर्गर्भवासोऽनुभवितव्यः। कीदृशा मरुतः। उच्यते। यत् यच्छब्दः अत्र लुप्तः। येषाम्। सीम् अनु सीमिति परिग्रहार्थीयः। अन्विति लक्षणे कर्मप्रवचनीयः प्रति-शब्देन समानार्थः। सर्वे प्रति द्विता द्विधा द्विविधमपि सांयोगिकं[20] च हस्त्यश्वादि शारीरं[21] च शवः बलम्। ये द्विविधेनापि बलेन न कुतश्चित्पूना इत्यर्थः ॥ ९ ॥

वेङ्कट० स्थिरम् हि जन्म मरुताम् वयः च मातुः निर्गमनाय[1]। न पुनर्जननाय मरुतः प्रविशन्ति[1]। यत् येषां सर्वं जगत् अनुप्रविशति[1] तत् बलं द्विधा भवति दिवि च पृथिव्यां चेति ॥ ९ ॥

---

१-१. ये कीदृशा मरुत् उच्यन्ते भ. २. इत्येषा° कु ३. °भ्योऽपीति कु ४. °ष्विति च भ कु ५-५. एतावत° रवि ६. युष्मत्र्व मूको ७-७. गृहेषु च रथेषु भ कु ८-८. तेषां वो मानुष भ कु, तेषां यामाय मानुष रवि ९. °येषु वि. १०-१०. जीर्णो व कम्पनेन वि' अ' ११. नास्ति मूको १२. यो तु रवि १३-१३. मनुष्यमात्र भ कु १४-१४. म्रियते वृद्धीभवन्ति मूको १५. ते भ कु १६-१६. म्रियते वृद्धीभवति मूको १७. सांयोगिक कु १८. शारीर भ कु १९. गमनाय वि' अ'. २०. °विशन्ति अ' कु २१. °प्रसरति वि' अ', अनुसरति कु

मुद्गल० एषाम् मरुताम् जानम् जन्मस्थानमाकाशम् स्थिरम् हि चलनरहितं खलु । मातुः मरुतां जननीस्थानीयादाकाशात्[1] वयः पक्षिणः निरेतवे निर्गन्तुं समर्था भवन्तीति शेषः । तादृशात् आकाशात् जन्मेति मरुतां स्तुतिः । यत् यस्मात् कारणात् शवः भवदीयं बलम् अनुक्रमेण मीम् सर्वतः द्विता द्वित्वेन द्यावापृथिव्योर्विभज्य वर्तते । अतो भवदीयं ज्ञानं स्थिरं हि इति पूर्वेणान्वयः ॥ ९ ॥

उदु॒ त्ये सू॒नवो॒ गिरः॒ काष्ठा॒ अज्मे॑ष्वत्नत । वा॒श्रा अ॑भि॒ज्ञु यात॑वे ॥ १० ॥

उत् । ऊँ इति॑ । त्ये । सू॒नवः॑ । गिरः॑ । काष्ठाः॑ । अज्मे॑षु । अ॒त्न॒त॒ । वा॒श्राः । अ॒भि॒ऽज्ञु । यात॑वे ॥ १० ॥

स्कन्द० उत् इत्युपसर्गः अत्नत इत्याख्यातेन सम्बन्धयितव्यः । उ इति पदपूरणः । ये उक्त-गुणाः त्ये ते मरुतः । सूनवः पुत्राः । कस्य । पृश्न्या रुद्रस्य वा । कुत एतत्—'पृश्नेः पुत्रा उपमासो रभिष्ठाः' (ऋ ५,५८,५), 'रुद्रस्य ये मीळ्हुषः सन्ति पुत्राः' (ऋ ६,६६,३) इत्यादिषु मन्त्रान्तरेषु दर्शनात् । गिरः काष्ठाः आपोऽत्र काष्ठा उच्यन्ते (तु. या २,१५) । गर्जितलक्षणा वाचः अपश्च । अज्मेषु तृतीयार्थे सप्तमी । अज्मैः अजनैः स्वगमनैः उदत्नत ऊर्ध्वं विस्तारयन्ति । मेघं प्रति 'स्वयं गत्वा' गर्जन्ति । तदीयाश्चापो विक्षिपन्तीत्यर्थः । कीदृशीरपः । वाश्राः वाश-नशीलाः शब्दकारिणीः । बह्वीरित्यर्थः । कथमुदत्नत । अभिज्ञु क्रियाविशेषणमेतत् । अभिगतं जानु यस्मिन् उदत्नने तदभिज्ञु । विपात्य जानुं महता यत्नेनेत्यर्थः । किमर्थम् । यातवे । पृथिव्यां पातनायेत्यर्थः ॥ १० ॥

वेङ्कट० उदत्नत उदततान्[2] अकुर्वन् विस्तीर्णाण्यपीरकुर्वन् अमी प्रेरयितारः[3] शब्दयन्तः[4] दिशः गमनेषु । यद्वा[5] गच्छन्त्योऽपधिभिः[6] विस्तारयन्ति दिश इति । तथा धेनूरिव अभिगतजानुकं[7] पातुम-कुर्वन् । ओपधिसद्भावाद्‍दुग्धसम्पाद्याः[8] पयांसि धेनव इति ॥ १० ॥

मुद्गल० ये पूर्वप्रकृताः गिरः सूनवः वाचः उत्पादका मरुतः । वायवो हि ताल्वोष्ठादिषु सम्बन्धो वाचमुत्पादयन्ति । अज्मेषु स्वकीयेषु गमनेषु सत्सु काष्ठाः अपः उत् उ [9]उत्कर्षेण अत्नत विस्तारितवन्तः । उदकं[10] विस्तार्य तत्पानार्थम् वाश्राः हम्भारवोपेता गाः अभिज्ञु जान्व-भिमुखं यथा भवति तथा यातवे गन्तुं प्रेरितवन्त इति शेषः ॥ १० ॥

इति प्रथमाष्टके तृतीयाध्याये त्रयोदशो वर्गः ॥

त्यं चि॑द् घा दी॒र्घं पृ॒थुं मि॒हो नपा॑त॒मम्र॑धम् । प्र च्या॑वयन्ति॒ याम॑भिः ॥ ११ ॥

त्यम् । चि॒त् । घ॒ । दी॒र्घम् । पृ॒थुम् । मि॒हः । नपा॑तम् । अम्र॑धम् । प्र । च्य॒व॒य॒न्ति॒ । याम॑ऽभिः ॥ ११ ॥

1. जनन° मूको. 2-2. नास्ति अ कु. 3. उच्चता कु. 4. प्रेरितारः कु; प्रेरितारं अ रवि. 5. शब्दायन्तः मूको. 6. यद्वि अ[11] वि[12] ख रवं रवि. 7. °षीमि. वि° रवं कु. 8. अभिनतजानु वि° अ°. 9. °ओपधीन° वि[13] रवं अ° कु. 10. नास्ति वि मे°.

स्कन्द० न च केवला गिरः काष्ठाश्च । किं तर्हि । 'त्यम् चित्[1] चिदित्यप्यर्थे । घ इति पदपूरणः । तच्छब्दश्रुतेश्च योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । योऽयं वैद्युतो नामाग्निः तमपि[1] दीर्घम् पृथुम् मिहः नपातम् मिह सेचने । सेचनात् मिह् मेघ उच्यते । नपादिति अपत्यनाम । मेघस्य अपत्यभूतम् । मेघाद्धि वैद्युतोऽग्निर्जायते । अथवा[2] नपादिति पौत्रस्यैव नाम, न पुत्रस्य । तत्रादित्यो मिहुच्यते । सोऽपि हि रश्म्याहृताभिरद्भिर्मध्यमं सिञ्चति । तस्यश्चादभ्यो मेघो जायते । मेघात् वैद्युत इत्येवमादित्यपौत्रत्वमस्य । अमृध्रम् मृधिहिंसार्थः । अहिंस्यम् अहिंसितारं वा साधूनाम् । अथवा मृध्रशब्दो मृदुपर्यायः । तथाहि यास्केन दर्शितम्[3]—"'दनो विश इन्द्र मृध्रवाचः' ( ऋ १,१७४,२ ) । दानमनसो नो मनुष्यानिन्द्र मृदुवाचः कुरु' ( शा ६,३१ ) इति । अमृध्रम् अमृदुं तीक्ष्णम् । अथवा मृध्रशब्दो निर्वीर्यवचनः । एवं हि छागलेयिनां श्रुतौ प्रयोगः—'दक्षिणेन हस्तेन देवानसृजत् । [4]सव्येनासुरान् । तेन[4] देवा वीर्यवन्तोऽभवन् । मृध्रा असुराः' इति । अत्र च वीर्यवत्प्रतियोगित्वेनोपादानात् मृध्रशब्दो निर्वीर्यवचन इति गम्यते । अमृध्रं वीर्यवन्तं प्र च्यावयन्ति मेघात् यामभिः यानैः । विद्युतमपि स्वगमनैरेव कुर्वन्तीत्यर्थः । [5]अथवा दावलक्षणोऽग्निरभिप्रेतः । न वैद्युतः । स हि मिहो नपात् । कथम् । मेघात् वृष्टिद्वारेण ओषधिवनस्पतयो जायन्ते । ओषधिवनस्पतिभ्यः स इति । तं ग्रीष्मे प्रवृद्धं प्रच्यावयन्ति अपगमयन्ति यामभिः यानैः । कस्य । सामर्थ्यात् वृष्टिलक्षणानामपाम् । योऽयं दावरूपोऽग्निः, तमपि वृष्टिं गमयन्तोऽपनयन्तीत्यर्थः[5] ॥ ११ ॥

वेङ्कट० त्यम्[6] चित् खलु दीर्घम् '[7]विस्तीर्णम् मेघस्य पुत्रम् अमृदुम् गमनैः[8] प्र च्यावयन्ति मरुतः । इदं[6] शिलोच्चयाभिप्रायमिति ॥ ११ ॥

मुद्गल० त्यं चित् घ[9] प्रसिद्धो यो मेघः तमपि मेघम् यामभिः स्वकीयगमनैः ॥ च्यावयन्ति मरुतः प्रकर्षेण गमयन्ति । कीदृशम् । दीर्घम् आयामोपेतम् पृथुम् तिर्यग्विस्तृतम् मिहः नपातम् सेचनी यस्य जलस्य न पातयितारम् । वृष्टिमकुर्वन्तमित्यर्थः । अमृध्रम् केनापि अहिंस्यम् ॥ ११ ॥

मरुतो यद्ध वो बलं जनाँ अचुच्यवीतन । गिरीँरचुच्यवीतन ॥ १२ ॥

मरुतः । यत् । ह । वः । बलम् । जनान् । अचुच्यवीतन । गिरीन् । अचुच्यवीतन ॥ १२ ॥

स्कन्द० हे मरुतः । यत् वः बलम् । ह इति पदपूरणः । यद्[11] वो बलं जनान्[12] असुरजनान्[12] अचुच्यवीतन स्वराष्ट्रेभ्यः च्यावितवत्[13] । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तदेव । गिरीन् अपि मेघान् पर्वतान् वा अचुच्यवीतन च्यावयति[14] ॥ १२ ॥

वेङ्कट० हे[11] मरुतः । यत् ह[11] वः बलम् तत् जनान् च्यावयति । तत् शिलोच्चयानपि[15] च्यावयति ॥ १२ ॥

मुद्गल० हे मरुतः । यत् ह यस्मादेव कारणात् वः युष्माकम् बलम् अस्ति अस्मादेव कारणात् जनान् प्राणिनः अचुच्यवीतन स्वस्वव्यापारेषु प्रैरयत[16] । तथा गिरीन् मेघान् अचुच्यवीतन प्रैरयत[16] ॥ १२ ॥

---

1-1. नास्ति रवि. 2. तदपि कु. 3. अथ तु भ रवि. 4. दर्शितः भ कु. 5. सव्येन नरान् ते भ कु. 6-6. नास्ति भ कु. 7. तम् अ[1] वि[2]. 8-8. मेघे विस्तीर्णस्य पुत्रमपुष्टं गमनैः वि[1] रुर्ष, मेघस्य पुत्रं मृदुगमनैः वि[1]. 9. इति अ[1,2] वि[1,3] रु रुर्ष रवि. 10. नास्ति वि मं[1]. 11. यद भ रवि. 12. नास्ति भ रवि. 13. नास्ति कु. 14. च्यावितवन्तः भ कु. 15. च्यावयन्ति मूको. 16. नास्ति वि[1,3] अ[1]-रु कु रवि. 17. च्यावितेति वि[1] रुर्ष. 18. प्रेर[°] मूको.

यद्ध यान्ति मरुतः सं ह ब्रुवतेऽध्वन्ना । शृणोति कश्चिदेषाम् ॥ १३ ॥

यत् । ह । यान्ति । मरुतः । सम् । ह । ब्रुवते । अध्वन् । आ । शृणोति । कः । चित् । एषाम् ॥

स्कन्द० यत् यदा यान्ति मरुतः, यान्ति च सम् ब्रुवते परस्परेण सम्भाषन्ते अध्वन् आ । आ इत्युप सर्गोऽनर्थकः । अध्वनोऽधि अध्वन उपरि । अध्वनीत्यर्थः । यदेति वचनात् तदेत्यध्याहार्यम् । तदा शृणोति कः चित् एषाम् [1]मरुतां सम्भाषणम्[2], न सर्वः । यस्यैवैते[3] मरुतः प्रसादवन्तः, स एवैतान् गच्छतः अध्वनि भाषमाणान् शृणोति, नापर इत्यर्थः ॥ १३ ॥

वेङ्कट० यदा खलु यान्ति मरुतः, तदानीं मार्गेऽन्यैः सह शब्दं कुर्वन्ति । तं शब्दम् एषाम्[4] क चित् अपि शृणोति । सर्वो जनः मार्गोपार्डं शृणोति ॥ १३ ॥

मुद्गल० यत् ह यदा खलु मरुतः यान्ति गच्छन्ति । तदानीम् अध्वन् आ मार्गे सर्वतः सम् ब्रुवते । सम्भूय ध्वनिम् अव्यक्तं कुर्वन्ति । एषाम् मरुतां सम्बन्धिनं शब्दम् कश्चित् यः कोऽपि शृणोति ॥ १३ ॥

प्र यात शीभमाशुभिः सन्ति कण्वेषु वो दुवः । तत्रो षु मादयाध्वै ॥ १४ ॥

प्र । यात । शीभम् । आशुभिः । सन्ति । कण्वेषु । वः । दुवः । तत्रो इति । सु । मादयाध्वै ॥ १४ ॥

स्कन्द० प्र इत्येष उपेत्येतस्य स्थाने । उप यात अस्मान् शीभम् क्षिप्रनामैतत् (द्र. निघ २,१५) । क्षिप्रम् आशुभिः [5]शीघ्रैः अश्वैः[5] । किं कारणम् । उच्यते । यस्मात् सन्ति कण्वेषु एकस्मिन्नपि 'अस्मदो द्वयोश्च' (पा १,२,५९) इत्येवं[6] बहुवचनम् । पुत्रपौत्राद्यपेक्षं वा । अस्मासु कण्वेषु व[7] युष्माकम् दुवः परिचर्याः[7] । अस्मदागमनात् युष्मान् वयं परिचरिष्याम इत्यर्थः । आगत्य च तत्रो षु तस्मादस्मदनुस्मृतेश्च योग्यार्थसम्बन्धो यच्छब्दोऽत्राध्याहर्तव्यः[8] । योऽस्मदीयो यज्ञो वेदिर्वा तत्र सुष्ठु मादयाध्वे मद तृप्तौ । तर्पयत आत्मानम् ॥ १४ ॥

वेङ्कट० तद्युक्ता भवत क्षिप्रं[9] शीघ्रैरश्वैः । सन्ति कण्वेषु वः परिचर्याः । तत्र सुष्ठु मदयध्व[10] ॥ १४ ॥

मुद्गल० हे मरुतः! आशुभिः वेगवद्भिः स्वकीयैर्वाहनैः शीभम् शीघ्रम् प्र यात प्रकर्षेण कर्मभूमिं गच्छत । कण्वेषु मेधाविषु अनुष्ठातृषु वः युष्माकम् दुवः दुवांसि परिचरणानि सन्ति । तत्रो तेष्वेव परिचारकेषु कण्वेषु मादयाध्वै तृप्ता भवत ॥ १४ ॥

अस्ति हि ष्मा मदाय वः स्मसि ष्मा वयमेषाम् । विश्वं चिदायुर्जीवसे ॥ १५ ॥

अस्ति । हि । स्म । मदाय । वः । स्मसि । स्म । वयम् । एषाम् । विश्वम् । चित् । आयुः । जीवसे ॥ १५ ॥

---

1. °स्मतोत्थरे व कु. 2-2. मरुतां सम्भाषणं मरुता व. 3. यस्यैव ते व. 4. एव वि[1] अ[1]. 5-5. अश्वै. शीघ्रैः व कु. 6. इति कु. 7. °यर्थो व कु. 8. °व्याहार्यः व कु. 9. दीर्घ क्षिप्रं वि[1]. 10. मेरुत वि[1] अर्थ; मरुतः वि[3]; दत्त वि[1] अ[1]; मरुत व कु इति मापत व स्रोतः.

स्कन्द० कस्मात् । उच्यते । हि-शब्दो यस्मादर्थे । स्म इति पदपूरणः[1] । यस्मात् अत्र अस्ति मदाय वः । किम् । सामर्थ्यात् सोमः । यस्मात् युष्मन्मदकरणसमर्थः सोमोऽस्तीत्यर्थः । यस्माच्च[2] स्मसि स्म वयम् स्मेति पदपूरणः[3] । विद्यामहे वयमपि एषाम् युष्माकं मरुतां स्तभूताः । यस्मात् वयमपि युष्माकं परिचारकाः सोमस्यार्पयितारः स्तुतिकराश्च[3] विद्यामह इत्यर्थः । यस्माच्च विश्वम् चित् आयुः । 'विश्वम्' ( निघ ३,१ ) इति बहुनाम । चिच्छब्दोऽप्यर्थे, आयुरित्यस्माच्च परो द्रष्टव्यः । आयुः इत्येतच्च अत्र अन्ननाम ( निघ २,७ ) । अन्नमपि बह्वस्तीत्यर्थः । किमर्थम् । जीवसे जीवनाय[4] जीवितुम् । अस्मज्जीवनार्थम् । यत् सोमेन आत्मानं तर्पयित्वा जीवनाय अस्मभ्यमन्नं दास्यथ,[5] तदपि बह्वस्तीत्यर्थः ॥ १५ ॥

वेङ्कट० [5]अस्ति हि[5] मदाय वः[6] अस्मासु स्तोत्रम् । तथा एषाम् भवताम्[7] [8]स्तोतारः वयम्[8] परिपूर्णम् आयुः जीवितुं भवामः ॥ १५ ॥

मुद्गल० हे मरुतः! वः युष्माकम् मदाय हर्षाय अस्ति हि स्म अस्माभिः प्रयुज्यमानं हविः[9] विद्यते खलु । एषाम्[10] युष्माकं भृत्यभूताः वयम् स्मसि स्म विद्यामहे खलु । जीवसे जीवितुम् विश्वम् चित् आयुः सर्वमप्यायुः प्रयच्छतेति शेषः ॥ १५ ॥

इति प्रथमाष्टके तृतीयाध्याये चतुर्दशो वर्गः ॥

[ ३८ ]

कद्ध नूनं कधप्रियः पिता पुत्रं न हस्तयोः । दधिध्वे वृक्तबर्हिषः ॥ १ ॥

कत् । ह । नूनम् । कधऽप्रियः । पिता । पुत्रम् । न । हस्तयोः । दधिध्वे । वृक्तऽबर्हिषः ॥१॥

स्कन्द० कत् शब्दः कदेत्यस्य पर्यायः । ह नूनम् इति पदपूरणौ । कदा हे कधप्रियाः! कम् उदकम् तद्[11] दधाति धारयतीति कधो मेघः । स प्रीः[12] प्रियो येषां ते कधप्रियाः[13] । अथवा[14] कध आदित्यः, उदकस्य धारयितृत्वात् प्रजापतिना वा प्रकाशनार्थं विहितत्वात् । प्रीञ् तर्पणे । [15]प्रीः प्रियः तर्पयिता[15] । आदित्यस्य तर्पयिता[16] येषां ते कधप्रियः[14] । मरुतो हि वर्षासु रश्म्याहृतैरुदकैरादित्येन तर्प्यन्ते । तेषां सम्बोधनं हे कधप्रियः! । पिता पुत्रम् न हस्तयोः यथा पिता बालकं पुत्रं लालयन् हस्तयोर्धारयति, एवम् दधिध्वे लालयन्तो[18] धारयिष्यथ । कम् । सामर्थ्याद् अस्मान् । कदा अस्मान् [19]लालयन्तो धारयिष्यथेत्यर्थः[19] । हे वृक्तबर्हिषः! सर्वैः मनुष्यैः वृक्तमास्तीर्णं बर्हिर्येषां ते वृक्तबर्हिषः । सर्वमनुष्यैः कृतयागा इत्यर्थः । तेषां सम्बोधनं हे वृक्तबर्हिषः! ॥ १ ॥

---

१. °पूरणम् भ कु. २ नास्ति भ कु. ३. °श्चास्त भ कु रवि[1]. ४. दास्यते भ कु. ५-५. भवति हि भ[1] वि[1]. ६. नास्ति वि[1]. ७. नास्ति कु. ८-८. स्तोऽस्य रवि. ९. हविषो मूको. १०. एषाम् वो वि. ११. तं कु. १२. नास्ति मूको. १३. °प्रियाः भ रवि[1]. १४. व्यत्ययेनैकवचनं द्रष्टव्यम् । अथवा मूको. १५-१५. तर्पयिता प्रियः भ रवि; प्रियः तर्पयिता कु. १६. नास्ति कु. १७. °प्रिः कु रवि[1]. १८. धारयन्ते भ; धारयन्तो कु. १९-१९. लालयिष्यथेत्यर्थः भ कु.

अतोऽनेन गमनौचित्यं प्रतिपाद्यते । क्व अन्यत्र भवतामुचितं गमनमित्यर्थः । क्वो विश्वानि सौभगा । 'विश्वम्' ( निघ ३,१ ) इति बहुनाम । 'भगः' ( निघ २,१० ) इति धननाम । शोभनानि धनानि सुभगानि । सुभगान्येव सौभगानि । स्वार्थिकस्तद्धितः । क्व वाऽन्यत्र बहूनि शोभनानि हविर्लक्षणानि धनानि । क्वान्यत्र परिचर्यातिरेके 'सुखं वा गमनौचित्यं' वा हविरतिरेको वा येन अस्मत्समीपं आगच्छथेति समस्तार्थः ॥ ३ ॥

वेङ्कट० क्व वः सुखानि नवतराणि मरुतः ! । क्व वा शोभनगमनानि[1] कल्याणानि । अत्र भास्करः— 'सुविते 'सु इते सूते सुगते' प्रजायामिति वा' ( या ४,१७ ) इति । क्व वा वः सर्वाण्येव सौभगानि ॥ ३ ॥

मुद्गल० हे मरुत: ! वः युष्माकं सम्बन्धीनि नव्यांसि नवतराणि[2] सुम्ना प्रजापशुरूपाणि रत्नानि क्व कुत्र वर्तन्ते । विश्वानि सर्वाणि सुविता सुविताानि शोभनफलानि रत्नादीनि क्व वर्तन्ते । सौभगा सौभाग्यरूपाणि गजाश्वादीनि क कुत्र वर्तन्ते । अवहीयैः युष्माभिरिमैः सर्वैः सहास्मत्समीपमायातेत्यर्थः ॥ ३ ॥

यद् यूयं पृश्निमातरो मर्तासः स्यातन । स्तोता वो अमृतः स्यात् ॥ ४ ॥

यत् । यूयम् । पृश्निऽमातरः । मर्तासः । स्यातन । स्तोता । वः । अमृतः । स्यात् ॥ ४ ॥

स्कन्द० यत् शब्दो यदिशब्दस्यार्थे । यदि यूयम् हे पृश्निमातरः ! पृश्निवर्णा गौः पृश्निः, सा माता येषां ते पृश्निमातरः । कुत एतत् । 'गोमातरो यच्छुभयन्ते अञ्जिभिः' ( ऋ १,८५,३ ) इति दर्शनात् । अथवा पृश्निर्गौरिति उभे अपि गुनामनी । द्यौरमाता येषां ते पृश्निमातरः । मर्तासः मनुष्याः स्यातन भवेत । स्तोता च वः अस्मदादिः अमृतः देवः स्यात् । ततः सर्वकामान् युष्माकं संवर्धयेदिति वाक्यशेषः । कुत एतत् । साकाङ्क्षत्वात् । 'यदग्ने स्यामहं त्वम्' ( ऋ ८,४४,२३ ), [5]"यदिन्द्र यावतस्त्वम्"[5] ( ऋ ७,३२,१८ ) इत्यादिषु चैवंरूपेषु मन्त्रेषु[6] दृष्टत्वात् । अथवा यदिति वचनात् तत इत्येतत् तृतीय एव पादेऽध्याहर्तव्यम्[7] । यदि यूयं मर्तासो मनुष्याः स्यातन, ततो युष्मत्प्रसादेन[8] स्तोता वः अमृतः मरणवर्जितः स्यादिति । एतद् उक्तं भवति—यूयं चेन्मनुष्या अभविष्यत, अवश्यमीदृशोभिः स्तुतिभिः प्रासादयत, फलेन स्तोतारं समयोजयिष्यत । देवास्तु भवन्तः । अतो वयं न जानीमः—किं यूयं[9] प्रसादयथ, न[10] । फलेन वा स्तोतारं[11] संयोजयिष्यथ, नेति[12] ॥ ४ ॥

वेङ्कट० यद्यपि यूयम् पृश्निमातर: ! मर्त्याः भवथ[13] [14]तथापि युष्माकम् स्तोता भवति अमृतः[14] इति ॥४॥

मुद्गल० हे पृश्निमातरः ! पृश्निनामकधेनुपुत्राः ! यूयम् यत् यद्यपि मर्तासः मनुष्याः स्यातन भवेत, तथापि वः युष्माकम् स्तोता यजमानः अमृतः स्यात् देवो भवेत् ॥ ४ ॥

मा वो मृगो न यवसे जरिता भूदजोष्यः । पथा यमस्य गादुप ॥ ५ ॥

मा । वः । मृगः । न । यवसे । जरिता । भूत् । अजोष्यः । पथा । यमस्य । गात् । उप ॥५॥

---

१-१. सुखे सुखोचितं अ, सुखे सौचित्यं कु. २. बहूनि शोभनधनानि क अ[2] वि[1]. ३-३. यते वि[1] अ[2]. ४. °तराणि मूको. ५-५. यदिन्द्राहं यथा त्वम् (ऋ ८,१४,१) कु. ६. नास्ति रवि. ७. °ध्याहर्तव्यः अ कु. ८. युष्माकं प्रसा° कु ९. यूयं न अ कु. १०. नास्ति अ कु. ११. स्तोतारं न अ कु. १२. इति अ कु. १३. भवेत रवि. १४-१४. तथा युष्माकं मर्तो अमृतत् वि[1] अ[2].

स्कन्द० मा इति प्रतिषेधार्थो भूत् इत्येतेन सम्बन्धयितव्यः । वः इत्यपि षष्ठ्यन्तं जरिता इत्येतेन सम्बन्धयितव्यः[1] । मृगः न यवसे यवसशब्दः सस्यवचनः । सामर्थ्याच्चात्रान्तर्णीतमत्वर्थः । यथा [2]मत्यवति देशे सस्यविनाशको मृगः सर्वस्याप्रियः[3], एवं वो जरिता 'जरिता' ( निघ ३,१६ ) इति स्तोतृनाम । युष्माकं स्तोता अस्मदादिः मा भूत् अजोष्यः अप्रियः । कस्य । सामर्थ्यात् सर्वस्य । सर्वस्यैव प्रियोऽस्त्वित्यर्थः । एवंताव्रज्जीवत स्तोतुराशास्य[4] । मरणोत्तरकालमपि पथा यमस्य यम आदित्यः तस्य यः पन्थाः देवयानस्तेन गात् उप गच्छतु । देवयानेन पथा स्वर्गलोकमुपगच्छत्वित्यर्थः । अथवा वः इत्येतद्जोष्य इत्येतेन सम्बध्यते । यथा यमस्तेरपि यमशब्दो यज्ञवचनः । गात्वित्यपि मध्यमपुरुषबहुवचनस्य स्थाने प्रथमपुरुषैकवचनम् । मा कदाचिदपि स्तोता युष्माकमप्रियो भूत् । किं तर्हि । सर्वदैव यज्ञस्य यो नियतः पन्था तेन उपगच्छत स्तोतारमित्यर्थः ॥ ५ ॥

वेङ्कट० मा भूत् युष्माकम् मृग इव यवसे स्तोता असख्यः[4], मा [5]वा उप गमत्[5] यमस्य पथा । मोपगच्छतु[6] मृत्युं वैवस्वतस्य पथेति ॥ ५ ॥

मुद्गल० हे मरुतः ! वः युष्माकम् जरिता स्तोता अजोष्यः असेव्यः मा भूत् । दृष्टान्तः । मृगः न यवसे यथा[7] तृणे भक्षणीये मृगः कदाचिदप्यसेव्यो न भवति, किन्तु सर्वदा तृणं भक्षयति, तद्वत् । किञ्च स्तोता यमस्य पथा यमलोकसम्बन्धिमार्गेण मा उप गात् मा गच्छतु । तस्य मरणं मा भूदित्यर्थः ॥ ५ ॥

इति प्रथमाष्टके तृतीयाध्याये पञ्चदशो वर्गः ॥

मो षु णः परापरा निर्ऋतिर्दुर्हणा वधीत् । पदीष्ट तृष्णया सह ॥ ६ ॥

मो इति । सु । नः । पराऽपरा । निःऽऋतिः । दुःऽहना । वधीत् । पदीष्ट । तृष्णया । सह ॥ ६ ॥

स्कन्द० मो इति निपातसमाहारो[8] निपातान्तरं वा मा इत्यस्यार्थे वर्तते । सु इति पदपूरणः । न[9] अस्मान् परापरा अत्यन्तपरा । युष्मत्प्रसादादेव दूरवर्तिनीत्यर्थः । निर्ऋतिः मृत्युदेवता । दुर्हणा दुःखं हन्तीति दुर्हणा । मा वधीत् । किं तर्हि । पदीष्ट पद गतौ । इहोऽपि चात्र सोपसर्गार्थ द्रष्टव्यः । अस्मत्तोऽपगच्छतु[10] । अथवा परापरेत्येतत् पदीष्ट इत्येतेन सम्बध्यते । परापरा गच्छतु । दूरं गच्छत्वित्यर्थः । न च केवला । किं तर्हि । तृष्णया सह तृष्णा नाम निर्ऋतेर्दुहिता, अन्यायेन वार्थाभिलाष तृष्णा, तया सह ॥ ६ ॥

वेङ्कट० मा च अस्मान् अपोड्य दुःखेन हन्तव्या दारिद्र्यम् वधीत्[11] । सा निर्ऋतिः अर्थीयया तृष्णया सह पततु[12] । धनसद्भावे हि तृष्णा विनश्यति ॥ ६ ॥

मुद्गल० हे मरुतः ! नः अस्मान् निर्ऋतिः रक्षोजातिदेवता मो षु वधीत् सर्वथा वधं मा कार्षीत् । कीदृशी । परापरा उत्कृष्टादप्युत्कृष्टा । अतिप्रबलेत्यर्थः । अत एव दुर्हणा केनापि निहन्तुम्

1 °तव्यं अ. २-२ सस्यवतो देशात् सर्वस्य विनाशकत्वात् मृगः सर्वस्य प्रियः अ. कु. ३ °राशास्य° स्वि. ४ माहित वि° अ°. ५-५ वो गमत् वि क, °गोगत° वि° अ°; मा गमत् वि°, यस्य° कु. ६ मो° कु. ७ यथा मूको. ८ °पात समा° अ स्वि. ९ मा न मूको. १० °मस्मतोऽप° अ कु. ११ मवधीत् वि°. १२ पततु वि° अ°.

अशनया। सा निर्ऋतिः तृष्णया सह पदीष्ट पततु। अस्मदीया तृष्णा, बाधिका निर्ऋतिश्च विनश्यत्वित्यर्थः ॥ ६ ॥

सत्यं त्वेषा अमवन्तो धन्वञ्चिदा रुद्रियासः । मिहं कृण्वन्त्यवाताम् ॥ ७ ॥

सत्यम् । त्वेषाः । अमऽवन्तः । धन्वन् । चित् । आ । रुद्रियासः । मिहम् । कृण्वन्ति । अवाताम् ॥ ७

स्कन्द० सत्यम् एतत्। त्वेषाः दीप्ताः मरुतः। अमवन्तः अमशब्दः बलमपर्यायः। आत्मवन्तः। बलवन्त इत्यर्थः। अथवा अम[1] गत्यादिषु। गमनवन्तः। अथवा अम रोगे। शत्रूणां रोगवन्तः। [2]रोगभूताः। उपद्रवकरा इत्यर्थः[2]। धन्वन् चित् आ[3] 'धन्व' (निघ १,३) इत्यन्तरिक्षनाम। विभक्तिलोपोऽत्र द्रष्टव्यः। आ इत्याकार उपसर्गः अप्यर्थे। अन्तरिक्षेऽप्यधि। निरालम्बनस्य अन्तरिक्षस्याप्युपरीत्यर्थः। रुद्रियासः मत्वर्थीयः घसत्ययो[?] द्रष्टव्यः। रुद्रपुत्राः। 'मिहम् सेचनात्' मिह्[4] वृष्टिरुच्यते। तां कृण्वन्ति अवाताम् वातवर्जितां वातेनानपहार्याम्। निरालम्बनेऽप्यन्तरिक्षे स्थित्वा निवातं[5] वर्षन्तीत्यर्थः। अथवा धन्वेति मरुदेश उच्यते। तस्याप्युपरि वृष्टिं कुर्वन्ति। अत्यन्तनिरुदकानपि देशान् वृष्टोदकवतः कुर्वन्तीत्यर्थः ॥ ७ ॥

वेङ्कट० सत्याः दीप्ताः बलवन्तः[6] निरुदके अपि देशे रुद्रपुत्राः वृष्टिं कुर्वन्ति निरन्तराम्[7] ॥ ७ ॥

मुद्गल० धन्वन् चित् मरुद्देशेऽपि रुद्रियासः रुद्रेण पालितत्वात् तदीया मरुतः। सर्वतः अवाताम् वायुरहितात् मिहम् वृष्टिम्[8] कृण्वन्ति कुर्वन्ति, तदेतत् सत्यम्। कीदृशा रुद्रियासः। त्वेषाः दीप्ताः अमवन्तः बलवन्तः ॥ ७ ॥

वाश्रेव विद्युन्मिमाति वत्सं न माता सिषक्ति । यदेषां वृष्टिरसर्जि ॥ ८ ॥

वाश्राऽइव । विऽद्युत् । मिमाति । वत्सम् । न । माता । सिसक्ति । यत् । एषाम् । वृष्टिः । असर्जि ॥

स्कन्द० विद्युत् यथा वाश्रा वाशनशीला अभिनवप्रसूता गौस्तद्वत् मिमाति मिमातिः शब्दकर्मा। मेघात् स्फोटयति। गर्जितलक्षणं शब्दं करोति। वत्सम् न माता यथा च माता वत्सम्, तद्वत् सिषक्ति सेवते। उपगच्छतीत्यर्थः। कम्। सामर्थ्यात् मेघं वा मरुतो वा। कदा। उच्यते। यत् यदा एषाम् मरुतां [9]स्वभूता वृष्टिः[9] असर्जि सृज्यते क्षिप्यते। यदैते मरुतः वर्षन्तीत्यर्थः ॥ ८ ॥

वेङ्कट० अभिनवप्रसूता[10] धेनुरिव विद्युत् गर्जितशब्दं करोति[11], वत्सम् इव माता सचते लोकम्, यत् एभिर्मरुद्भिः[12] वृष्टिः[13] सृज्यते ॥ ८ ॥

मुद्गल० वाश्रेव[14] [15]शब्दयुक्ता प्रस्नुतस्तनवती[15] धेनुरिव विद्युत् मेघस्था दृश्यमाना सती मिमाति शब्दं

---

१. नास्ति श कु. २-२. नास्ति श कु. ३. बद्ध्र° श कु. ४. मिहः रवि. ५. निवातं श कु. ६. नास्ति वि¹ अ¹. ७. निरन्तरम् वि¹ अ¹ कु रवि. ८. नास्ति वि. ९-९. °भूता वृष्टिर् (?) श. १०. प्रसूता छ स¹ वि¹. ११. °ति मेघात् स्फोटयति वि¹ अ¹. १२. °भिर्मरुद्भिस्तावद्भिः वि¹ छपं. १३. वृष्टिः अ¹; दृष्टिः वि¹; विष्टिः वि¹ अ¹. १४. नास्ति वि मै¹. १५-१५. वत्सशब्दमस्नुतस्तनवती वि मै¹.

करोति। विद्युद्वेलाया हि मेघगर्जनं प्रसिद्धम्। माता धेनुः वत्सम् न वत्समिव सिषक्ति इव विद्युत् मरुतः सेवते। यत् यस्मात्कारणात् एषाम् मरुताम्[1] सम्बन्धिनी वृष्टिः अवर्षि गर्जनसहित विद्युत्काले वृष्टा[2] भवति, तस्माद्विद्युतः मरुत्सेवनमुपपन्नम् ॥ ८ ॥

दिवा चित् तमः कृण्वन्ति पर्जन्येनोदवाहेन । यत् पृथिवीं व्युन्दन्ति ॥ ९ ॥

दिवा । चित् । तमः । कृण्वन्ति । पर्जन्येन । उदऽवाहेन । यत् । पृथिवीम् । विऽउन्दन्ति ॥ ९ ॥

स्कन्द० 'दिवा चित् तमः कृण्वन्ति'[1] दिवा अपि तमः कुर्वन्ति मरुतः पर्जन्येन उदवाहेन उदकवाहिना[4]। उदकवता मेघेनादित्य छादयन्तो दिवाऽपि तमः कुर्वन्तीत्यर्थः। कदा। उच्यते। यत् यदा पृथिवीं व्युन्दन्ति विविधं क्लेदयन्ति। यदा वर्षन्तीत्यर्थः ॥ ९ ॥

वेङ्कट० अहनि[5] अपि[5] अन्धकारम् कुर्वन्ति पर्जन्येन उदकवाहेन[6] यदा[7] पृथिवीम् क्लेदयन्ति ॥ ९ ॥

मुद्गल० मरुतः उदवाहेन उदकधारिणा पर्जन्येन मेघेन सूर्यमाच्छाद्य दिवा चित् अहन्यपि तमः कृण्वन्ति अन्धकारं कुर्वन्ति। यत् यदा पृथिवीम् भूमिम् व्युन्दन्ति विशेषेण[8] क्लेदयन्ति तदानीमेते वृष्टिकाले[9] तमः कुर्वन्तीति पूर्वत्रान्वयः ॥ ९ ॥

अध स्वनान्मरुतां विश्वमा सद्म पार्थिवम् । अरेजन्त प्र मानुषाः ॥ १० ॥

अध । स्वनात् । मरुताम् । विश्वम् । आ । सद्म । पार्थिवम् । अरेजन्त । प्र । मानुषाः ॥ १० ॥

स्कन्द० अध-शब्दः पदपूरणः, अपिचेत्यस्यार्थे। अपिच स्वनात् शब्दादपि मरुतां विश्वं सर्वम्। आकारस्तु पदपूरणः। सद्म सदनं स्थावरम्[10]। पार्थिवं पृथिव्यां भवम्। अरेजन्त प्र मानुषा[11] च प्रारेजन्त। 'भ्यसते रेजते इति भयवेपनयोः' (या ३,२१)। प्रकर्षेण बिभ्यति भयेन कम्पन्ते। मनुष्यग्रहणं चात्र जङ्गममात्रोपलक्षणार्थम्। शब्दादपि मरुतां [12]सर्वं स्थावरं जङ्गमं[13] च प्रकर्षेण [13]बिभेति भयेन कम्पते[13] इत्यर्थः ॥ १० ॥

वेङ्कट० अनन्तरं मरुताम्[14] स्वनात् पार्थिवम् विश्वम् सद्म अरेजत अकम्पत। सीदन्ति[15] अस्मिन्निति सद्म गृहम्। प्रकर्षेण मानुषा[16] च अरेजन्त ॥ १० ॥

मुद्गल० मरुताम् सम्बन्धिनः स्वनात् अध ध्वनेर्गर्जनरूपादनन्तरम् पार्थिवम् पृथिवीसम्बन्धि विश्वम् सद्म सर्वं गृहम् आ समन्तात् अरेजतेति शेषः। तथा मानुषाः गृहवर्तिनो मनुष्या अपि प्र अरेजन्त प्रकर्षेण कम्पितवन्तः ॥ १० ॥

इति प्रथमाष्टके तृतीयाध्याये षोडशो वर्गः ॥

---

१ मरुताना मूको २ नास्ति वि ३-३ नास्ति अ कु ४ °वाहेन अ ५ अपि अ[1] कु रवि दिवा अ[1] वि[1] ६ °मध्यस्य वि[1] ७ उदवा° वि[1][1] अ[1] कर्प ८ यथा वि[1] हर्प कु ९ नास्ति वि मै[1] १० स्थाने कु नास्ति रवि ११ मानुषा मनुषा रवि अ १२,१२ सर्वस्थावरजङ्गमम् रवि १३,१३ बिभ्यति कम्पन्ते ॥ १४ मरुतां च अ[1] रवि १५ आसीद° वि[1] अ[1] १६ मनुषा वि[1] कर्प

मरुतो वीळुपाणिभिश्चित्रा रोधस्वतीरनु । यातेमखिद्रयामभिः ॥ ११

मरुतः । वीळुपाणिऽभिः । चित्राः । रोधस्वतीः । अनु । यात । ईम् । अखिद्रयामऽभिः ॥ ११ ॥

स्कन्द० हे मरुतः ! वीळुपाणिभिः वीळुशब्दोऽत्र दृढवचनः । पाणिशब्दोऽप्यत्राधानामप्रपादे खुरे[1] वा वर्तते । दृढाग्रपादैः दृढखुरैर्वा । चित्राः रोधस्वतीः अनु 'रोधस्वत्यः' (निघ १,१३) इति नदीनाम । अनु-शब्दोऽपि लक्षण कर्मप्रवचनीयः प्रतिशब्देन समानार्थः । विचित्रा नदीः प्रति । यात गच्छत । ईम् इति पदपूरणः । अखिद्रयामभिः अखिन्नगामिभिरश्वैः । सर्वदाऽश्रान्तैरश्वैरित्यर्थः[2] । यज्ञं चागच्छन्तः क्रीडार्थं विचित्रा नदीरपि प्रति गच्छतेति समस्तार्थः ॥ ११ ॥

वेङ्कट० मरुतः । दृढैः पाणिभिः[3] सह चित्राः[4] नदीः हस्तीकृत्य ताः पूरयितुम् यात अच्छिद्रैर्गमनैः ॥ ११ ॥

मुद्गल० हे मरुतः ! यूयम् वालुपाणिभिः दृढहस्तैः सहिताः चित्राः रोधस्वतीः अनु दृढकूला नदीः अनुलक्ष्य अखिद्रयामभिः अच्छिद्रगमनैः यात ईम् गच्छतैव ॥ ११ ॥

स्थिरा वः सन्तु नेमयो रथा अश्वास एषाम् । सुसंस्कृता अभीशवः ॥ १२ ॥

स्थिराः । वः । सन्तु । नेमयः । रथाः । अश्वासः । एषाम् । सुऽसंस्कृताः । अभीशवः ॥ १२ ॥

स्कन्द० स्थिराः अविचलाः वः युष्माकं स्वभूता[5] सन्तु नेमयः रथचक्रधाराः, रथाः च[6], अश्वासः च[6] एषां रथानां सम्बन्धिनः सुसंस्कृताः सुष्ठु च[7] संस्कृताः अभीशवः अश्वप्रग्रहाः । भवताम् आगच्छताम् सर्वाण्यागमनसाधनानि सुदृढानि भवन्त्वित्यर्थः ॥ १२ ॥

वेङ्कट० आगच्छताम् भवताम् रथनेमयः स्थिराः सन्तु[8] । अथ परोक्षः । रथाः अश्वाश्च एषाम् स्थिराः सन्तु । सुसंस्कृताः च अश्वप्रग्रहाः भवन्तु ॥ १२ ॥

मुद्गल० हे मरुतः ! एषाम् वः युष्माकम् नेमयः रथचक्रधाराः स्थिराः सन्तु । रथाः अश्वासः अश्वाश्च स्थिराः सन्तु । अभीशवः अश्वग्रहणरज्जवः सुसंस्कृताः अश्वबन्धनरज्जुपरिग्रहेषु[10] स्वलङ्कृताः सावधानाः सन्तु ॥ १२ ॥

अच्छा वदा तना गिरा जरायै ब्रह्मणस्पतिम् । अग्निं मित्रं न दर्शतम् ॥ १३ ॥

अच्छ । वद । तना । गिरा । जरायै । ब्रह्मणः । पतिम् । अग्निम् । मित्रम् । न । दर्शतम् ॥ १३ ॥

स्कन्द० [11]अच्छ वद[11] अच्छशब्द आप्तुमित्यस्यार्थे । [12]वदेत्यात्मना पुनात्मनन्तरात्मनः प्रैषः[12] । हे अन्तरात्मन् ! आप्नुहि वद । कान्[13] । प्रकरणात् मरुतः । केनाप्तुम् । तना धननामैतत् (द्र निघ २,१०) । हविर्लक्षणेन धनेन । गिरा जरायै 'गीः' (निघ १,११) इति वाङ्नाम । [14]'जरा स्तुतिः'[14] । जरतेः स्तुतिकर्मणः (द्र निघ ३,१४) । तृतीयायाः स्थाने चतुर्थी । वाचा स्तुतिलक्षणया । युष्मानहं हविषा स्तुत्या च

---

१ खुरेषु मूको २ सर्वदानुश्रान्तैः अ कु ३ °भिद्दृढाग्रपादैरश्वैः अ[1] वि[1] ४ चित्र° वि[1] एप. ५ नास्ति कु ६-६ नास्ति अ कु ७-७ अश्वाश्च रवि अ अश्वाश्च कु ८ नास्ति रवि ९ भवन्तु अ[2] वि[1] १० °रेषु ११-११ नास्ति कु १२-१२ वदेत्यन्तरात्मन प्रैषः अ कु † आगत रवि १३ नास्ति कु १४-१४ जरायै रवि

भासवानित्येतत्[1] मरुतो वदेरर्थः । अथवा अच्छा वदेति अच्छ अभे स्थाने । अभिवद । स्तुहीत्यर्थः । तना इत्यत्रापि तृतीया । धनेन हेतुना । धनलाभार्थमित्यर्थः । केन स्तवानि[2] । उच्यते । गिरा जरायै वाचा स्तुतिलक्षणया । कथमच्छा वदानि[3] । उच्यते । ब्रह्मणस्पतिम् अग्निम् मित्रम् न नशब्द उपमार्थीयस्त्रिभिरप्येतैः सम्बन्धयितव्यः । ब्रह्मणस्पतिमिव च अग्निमिव च मित्रमिव च । कीदृशं मित्रम्[4] । दर्शतम् दर्शनीयम् । [5]अथवा दर्शतमिति मरुतां गणाभिधानम्, न मित्रस्य । गणाभिप्रायं चैकवचनम् । अच्छा वद दर्शनीयं मरुतां गणमिति[5] ॥ १३ ॥

वेङ्कट० अभि वद[1] तया गिरा स्तोतुम् ब्रह्मणस्पतिम् अग्निम् मित्रम् इव च [7]दर्शनीयं मारुतं गणम्[7] ॥ १३ ॥

मुद्गल० हे ऋत्विक्समूह[1] तना तनया देवतास्वरूप प्रकाशयन्त्या गिरा वाचा ब्रह्मणस्पतिम् मन्त्रस्य पालक मरुद्गणम् अग्निम् दर्शतम् दर्शनीयम् मित्रम् न मित्रमपि जरायै स्तोतुम् अच्छ आभिमुख्येन वद ब्रूहि ॥ १३ ॥

मिमीहि श्लोकमास्ये पर्जन्य इव ततनः । गाय गायत्रमुक्थ्यम् ॥ १४ ॥

मिमीहि । श्लोकम् । आस्ये । पर्जन्यःऽइव । ततनः । गाय । गायत्रम् । उक्थ्यम् ॥ १४ ॥

स्कन्द० [8]मिमीहि †मिमीहीत्यात्मन एवायमन्तरात्मन प्रैषः† । निर्मिमीष्व कुरु हे अन्तरात्मन्[8] श्लोकम् वाङ्नामैतत् (द्र निघ १,११) । स्तुतिलक्षणं शब्दम् । आस्ये तृतीयार्थे सप्तम्येषा । आस्येनात्मीयेन वदनेन ‡निर्माय च‡ पर्जन्य इव ततन यथा पर्जन्यः स्वशब्दं विस्तारयति तद्वद् विस्तारय । विस्तारितेन च तेन गाय[9] गायतिरर्चतिकर्मा (द्र निघ ३,१४) । स्तुहि गायनम् स्तुत्यम् उक्थ्यम् प्रशस्यम् । एकवचननिर्देशात् प्रकरणात् उत्तरस्यामपि दर्शनात् मारुतं गणम्[9] ॥ १४ ॥

वेङ्कट० 'निर्मिमीहि पूर्वम् श्लोकम्' आस्ये । अथ तम् पर्जन्य इव वृष्टिं विस्तारय । [10]गाय गायत्रम् च साम उक्थार्हं स्तोत्र[10] ॥ १४ ॥

मुद्गल० हे ऋत्विक्समूह[1] आस्ये स्वकीयमुखे श्लोकम् स्तोत्रम् मिमीहि निर्मितं कुरु । त च श्लोकम् ततन विस्तारय । दृष्टान्तः । पर्जन्य इव यथा मेघो वृष्टिं विस्तारयति तद्वत् । उक्थ्यम् शस्त्रयोग्यम् गायनम् गायत्रीच्छन्दस्कं सूक्तम् गाय पठ ॥ १४ ॥

वन्दस्व मारुतं गणं त्वेषं पनस्युमर्किणम् । अस्मे वृद्धा असन्निह ॥ १५ ॥

वन्दस्व । मारुतम् । गणम् । त्वेषम् । पनस्युम् । अर्किणम् । अस्मे इति । वृद्धाः । असन् । इह ॥ १५ ॥

स्कन्द० [11]वन्दस्व मारुतम् गणम् त्वेषम् दीप्तम् पनस्युम् । स्तुतिकामिनमित्यर्थः[11] । अथवा पनस्यतिरर्चतिकर्मा (द्र निघ ३,१४) । स्तुत्यमित्यर्थः । अर्किणम् स्तोतृप्रमुखैर्गुणैर्मन्त्रवन्तमन्नवन्तं वा । किं कारणम् ।

1-1 °भासवानि° इति. 2 भा स° इति, स्तुवान भ, स्तवान कु 3 वद कु 4 नास्ति न भ 5-5 नास्ति भ 6. °वदत वि¹°² इति 7-7 °नीयं स्तुतिकाम दर्शनं च दर्शनीयं मारुतं गणं वन्दस्व (?) वि¹ भ². 8-8 नास्ति भ †-† °देवमन्तरात्मन प्रैष इति ‡-‡ नास्ति कु 9 गाय °त्यम् भ इति. 9 9 नास्ति कप वि¹, °मिमीहि पूर्वमुन्श्लो° वि². 10 10 गाय गायत्रं च सामोक्थस्तोत्रं प्रयुङ्क्ष्व वि¹ भ². 11 11 त्रुटितम् भ कु

यस्मात् अस्मे अस्माकं स्वभूते वृद्धाः वीर्येण परिवृद्धाः मरुतः असन् नित्यं भवन्ति इह कर्मणि। यस्मादस्मदीये कर्मणि[1] नित्यं मरुतः सन्निहिता भवन्ति, तस्माद् वन्दस्व मारुतं गणमिति समस्तार्थः। अथवा वन्दस्व मारुतं गणमित्यर्धर्च[2] एव समाप्तं वाक्यम्। तृतीयस्तु पादः आशीः भिन्नमेव वाक्यम्। मरुतां प्रसादेनास्माकं परिवृद्धा असन् भवन्तु। काः। सामर्थ्यात् सम्पदः[3] ॥ १५ ॥

वेङ्कट० स्तुहि मारुतम् गणम् दीप्तं स्तुतिकामं शस्त्रवन्तम्। अस्मासु[4] भवन्तु प्रवृद्धाः[5] इह मरुतः ॥ १५ ॥

मुद्गल० हे ऋत्विक्संघ! मारुतम् मरुत्सम्बन्धिनम् गणम् समूहम् वन्दस्व नमस्कुरु। कीदृशं गणम्। त्वेषम् दीप्तम्। पनस्युम् स्तुतियोग्यम्। अर्किणम् अर्चनोपेतम्। अस्मे अस्माकम् इह अस्मिन् कर्मणि वृद्धाः असन् मरुतः प्रवृद्धा भवन्तु ॥ १५ ॥

इति प्रथमाष्टके तृतीयाध्याये सप्तदशो वर्गः ॥

[ ३९ ]

प्र यदि॒त्था प॑रा॒वतः॑ शो॒चिर्न मान॒मस्य॑थ ।
कस्य॒ क्रत्वा॑ मरुतः॒ कस्य॒ वर्प॑सा॒ कं या॑थ॒ कं ह॑ धूतयः ॥ १ ॥

प्र । यत् । इ॒त्था । प॒रा॒ऽवतः॑ । शो॒चिः । न । मान॑म् । अस्य॑थ । कस्य॑ । क्रत्वा॑ । म॒रु॒तः॒ । कस्य॑ । वर्प॑सा । कम् । या॒थ॒ । कम् । ह॒ । धू॒त॒यः॒ ॥ १ ॥

स्कन्द० [6]हे मरुत। यत् ये यूयम्[6] इत्था सत्यनामैतत् (द्र. निघ ३,१०)। सत्यमेव परावतः दूरात् शोचिः न शोचिर्दीप्तिरुच्यते। [7]यथा अग्निरादित्यो वा सर्वत्र स्वदीप्तिं प्रास्यति एवम्[7] मानम्[8] वृष्टिद्वारेण सर्वस्य निर्मातारं मेघम् प्र अस्यथ प्रकर्षेण सर्वत्र[9] क्षिपथ। अथवा मानो गर्व उच्यते। शोचिरित्यपि प्रथमार्थे क्षेप्तृवचनम्, न[10] क्षिप्यमाणवचनम्। यथा अग्निरादित्यस्य वा शोचिर्दीप्तिः दूरात्तमांसि प्रास्यति एवं यूयं शत्रूणां मानं गर्वं दूरात् प्रास्यथ क्षिपथ। नाशं गमयथेत्यर्थः। यच्छन्दश्रुतेस्तच्छन्दोऽध्याहर्तव्यः। तेः कस्य क्रत्वा हेतावियं तृतीया। कस्य यजमानस्य कर्मणा हेतुना। कस्य वा वर्पसा रूपेण। कम् वा यजमानं प्रति याथ गच्छथ। कम् सुखनामैतत् (द्र. निघ ३,६)। क्रियाविशेषणं चैतत् सुखम्। सुखम्। अक्लेशेनेत्यर्थः। निपातो वा कंशब्दः पदपूरणः। हे धूतयः! कम्पयितारः। शत्रूणाम्। यत्कर्म कुर्वन्तो यद्रूपं वा यं वा यजमानं प्रति यूयमक्लेशेन गच्छथ,[11] तं महां कथयत, सुखमहमपि तत्कर्मा तद्रूप [illegible] एव च भवामीति। आगमनविलम्बनादुपालम्भोऽयम् ॥ १ ॥

वेङ्कट० प्रास्यथ इत्थं मरुतः! दूरात् यत् तेजः इवात्मीयम् शब्दम्, तत् [12]कस्य कर्मणा मरुतः! केन [illegible] वेष्टिताः[12]। कम् च देशं यूयम् याथ, कम् वा तत्र पुरुषं हे कम्पयितारः! ॥ १ ॥

---

१. °र्मणि अस्मत्कर्मणि इति भ. २. °त्यर्थं° भ ३. °म्पद् भ. ४ अस्माकं सुभ° इति वि[1]. ५. °द्धम् अ[1]; वृद्धा अ[1] वि[1]. ६-६. ये यूयम् अ कु. यद् ये मरुत. यूयम् इति. ७-७. द्युदितम् भ. ८. मानव. भ. ९. नास्ति भ कु. १०. नास्ति मूको. ११. गच्छत भ. १२-१२. कस्य यजमानस्य कर्मणा मरुतः वेष्टिताः कम् स्तोत्रं च यजमानं वि[1] अ[1].

वेङ्कट० स्थिराणि युष्माकम् सन्तु आयुधानि शत्रूणां[1] प्रेरणाय। अपि च दृढं च प्रतिष्कभितुं युष्माकम् अस्तु बलम्[2] अतिशयेन स्तोतव्यम्। मा मायावतः मर्त्यस्य अयजमानस्य[3] ॥ २ ॥

मुद्गल० हे मरुतः! वः आयुधा युष्माकम् आयुधानि पराणुदे पराणां शत्रूणामपनोदनाय स्थिरा सन्तु स्थिराणि भवन्तु। उत अपि च प्रतिष्कभे शत्रूणां प्रतिबन्धाय[4] वीळु सन्तु दृढानि सन्तु। युष्माकम् तविषी बलम् पनीयसी अतिशयेन स्तोतव्यम् अस्तु भवतु। अस्मासु मायिनः छद्मचारिणः मर्त्यस्य मनुष्यस्य शत्रोः मा बलम् भवतु[5] ॥ २ ॥

परा ह यत् स्थिरं हथ नरो वर्तयथा गुरु।
वि याथन वनिनः पृथिव्या व्याशाः पर्वतानाम् ॥ ३ ॥

परा। ह। यत्। स्थिरम्। हथ। नरः। वर्तयथ। गुरु। वि। याथन। वनिनः। पृथिव्याः। वि। आशाः। पर्वतानाम् ॥ ३ ॥

स्कन्द० परा इत्युपसर्गः हथ इत्याख्यातेन सम्बन्धयितव्यः। हशब्दः पदपूरणः। यत् स्थिरम् अविचलं स्वस्मात्प्रदेशात्[6] चालयितुमशक्यम् "यच्छन्दसुपेक्षाच्छन्दोऽध्याहार्यः। तद् यूयं परा हथ स्वप्रदेशात्स्थितं मुष्टिभिश्चूर्णयथ। हे नरः! मनुष्याकारा मरुतः!। यच्च स्वस्मात् प्रदेशाच्चालयितुमशक्यं[7] तत् वर्तयथ गमयथ[8]। प्रक्षेपयथेत्यर्थः। गुरु गुर्वपि[9]। दुष्प्रक्षेपमपीत्यर्थः। किञ्च वि याथन विगच्छथ। लङ्घयथेत्यर्थः। किम्। वनिनः वृक्षान्। कुतः। पृथिव्याः पृथिवीतः। भूमितः उद्गम्य "वृक्षानपि लङ्घयथेत्यर्थः[10]। न च पृथिवीत एव केवलातः[11]। किं तर्हि। व्याशाः 'आशाः' (निघ १,६) इति दिङ्नाम। दिशोऽपि विगच्छथ[12] पर्वतानाम् सम्बन्धिनीः। कः[13] पुनः पर्वतानां दिग्भिः सम्बन्धः। दिक्षु पर्वता व्यवतिष्ठन्ते। अथवा पर्वतानामिति द्वितीयार्थे षष्ठी। दिशः पर्वतांश्च विगच्छथ इति। ऊर्ध्वं तिर्यक् च लङ्घनसमर्थाः स्थेत्यर्थः। अथवा वियाथनेति[14] धातुरन्यार्थवर्तिन्यर्थो द्रष्टव्यः। विगमयथ वनिनः पृथिव्याः। भूमितः "वृक्षान् उन्मूलयथेत्यर्थः[15]। व्याशाः पर्वतानाम् आशातान्त इत्यव्याख्यानः। पर्वत इत्यपि मेघनाम (द्र. निघ १,१०)। व्याप्ताभिरैश्वितव्याभिरपेक्षैस्मा आशा "मेघानां विगमयथ[16]। नाशयथेत्यर्थः ॥३॥

वेङ्कट० परा हथ यदा[17] स्थिरम् पर्वतादिकम्, यदा[18] वा नरः! "गुरुभारमपि शिलादिकं गमनीय[19] चलयथ, यदा[20] पृथिव्याः "वृक्षाणां मध्येन[21] गच्छथ, तथोपरि च पर्वतानाम् दिशः मध्येन गच्छथ विविच्यन्तः ॥ ३ ॥

मुद्गल० हे नरः! नेतारः! मरुतः! यत् यदा स्थिरम् वस्तु परा हथ वृक्षादिकं पराङ्गतं भग्नं कुरुथ। गुरु गुरुत्तरम् पाषाणादिकं वर्तयथ प्रेरयथः[22]। तदानीं पृथिव्याः सम्बन्धिनः वनिनः वनवतो[23]

1. मन्यतनूनां वि[1] अ[1]. 2. बलम् भवि कु 3. यष्ट[1] वि[1]. 4. प्रवसनाय वि अे[1]. 5. म भव[1] वि मे[1]. 6. [illegible] अ. 7-7. नास्ति अ कु. † [illegible] दवि[1]. 8. नास्ति अ दवि. 9. उर्वपि दवि. 10-10. [illegible] अ दवि[1]. 11 वेलनत् मूको. 12. गच्छथ कु. 13. [illegible] अ कु. 14. [illegible] कु, [illegible] अ. 15-15. [illegible] कु. 16. [illegible] वि[1]. 17. यदा वि[1] अ[1]; नास्ति कु 18 18. [illegible] वि[1] अ[1]. 19 [illegible] वि[1] 20-20. [illegible] अ[1] दवि वि[1] कु; [illegible] अ. 21. नास्ति वि

वृक्षान् वि यायन वियुज्य मध्ये गच्छथ ह। अरण्यगताना निबिडाना वृक्षाणा मध्ये यस्य कस्यापि वृक्षस्य भग्नत्वात् इतरवृक्षाणा परस्परवियोगेन प्रौढो मार्गो भवति खलु। तथा पर्वतानाम् आशा पर्वतपार्श्वेदिश वि यायन वियुज्यमाना[1] गच्छथ ॥ ३ ॥

नहि वः शत्रुर्विविदे अधि द्यवि न भूम्यां रिशादसः ।
युष्माकमस्तु तविषी तना युजा रुद्रासो नू चिदाधृषे ॥ ४ ॥

नहि । वः । शत्रुः । विविदे । अधि । द्यवि । न । भूम्याम् । रिशादसः । युष्माकम् । अस्तु । तविषी । तना । युजा । रुद्रासः । नु । चित् । आऽधृषे ॥ ४ ॥

स्कन्द० नहि व शत्रु शातयितः विविदे विद्यते। अधि द्यवि दिव उपरि। द्युलोक इत्यर्थ। न अपि भूम्याम् हे रिशादस[1] रिशिर्हिसार्थ। असु क्षेपणे। रिशतोऽस्यन्तीति रिशादस। हिंसितृणा प्रतिहिंसितार इत्यर्थ। तेषा सम्बोधन हे रिशादस[1]। किञ्च युष्माकम् अस्तु तविषी तना युजा। 'तना' (निघ २,१०) इति धननाम। 'युष्मदीय बल हविर्लक्षणेन धनेन युक्तम् अस्तु' अस्मदीय हविरुप भुक्तामित्यर्थ। हे रुद्रास! पितृरुद्रोऽय सोऽयमित्यभिसम्बन्धात् पुत्रेषु प्रयुक्त। रुद्रपुत्रा इत्यर्थ। कुत एतत्। 'रुद्रस्य ये मीळ्हुष सन्ति पुत्रा' (ऋ ६,६६,३) इत्यादिषु मरुता रुद्रपुत्रत्व दर्शनात्। किमर्थम्। नू चित् आधृषे। 'नु' (निघ २,१५) इति क्षिप्रनाम। चिच्छब्द पदपूरण। क्षिप्रमस्मच्छत्रूणाम् धर्षणाय[3] अभिभवाय[4]। अथवा नू चिदाधृष इत्येतत् पूर्वानपेक्ष भिन्नमेव[5] वाक्यम्। नूचिच्छब्दश्चात्र नञर्थे। 'नू चित् स भ्रेषते जनो न रेषत्' (ऋ ७,२०,६) इति यथा। नाधृषे नाभिभवाय[6]। क। सामर्थ्याद् यूयम्। प्रकृतत्वाद्वा तविष्या[7] युष्मदीया तविषी। यूयं युष्मदीय वा[8] बल भ[9] कुतश्चिदभिभवं प्राप्नुथेत्यर्थ[10] ॥ ४ ॥

वेङ्कट० नहि व शत्रु ज्ञायते[11] स्वर्गे, न च भूम्याम् रिशतामसितार[1]। युष्माकम् अस्तु बल हविर्लक्षणेन धनेन सहायेन रुद्रपुत्रा[1] क्षिप्र शत्रूणामाधर्षणाय[12] ॥ ४ ॥

मुद्गल० हे रिशादस! शत्रुहिंसका[1] मरुत[1] अधि द्यवि द्युलोकस्योपरि व युष्माकम् शत्रु नहि विविदे न बभूव। तथा भूम्याम् अपि शत्रु न बभूव। हे रुद्रास! रुद्रपुत्रा[1] मरुत[1] युष्माकम् पूर्वोक्तप्रकारमस्याना भवताम् युजा योगेन पारस्परैकमत्येन आधृषे वैरिणा सर्वतो धर्षणाय तविषी बलम् नू चित् क्षिप्रमेव तना सुविस्तृता अस्तु भवतु ॥ ४ ॥

प्र वेपयन्ति पर्वतान् वि विञ्चन्ति वनस्पतीन् ।
प्रो आरत मरुतो दुर्मदा इव देवासः सर्वया विशा ॥ ५ ॥

प्र । वेपयन्ति । पर्वतान् । वि । विञ्चन्ति । वनस्पतीन् । प्रो इति । आरत । मरुतः । दुर्मदाःऽइव । देवासः । सर्वया । विशा ॥ ५ ॥

---

१ वियुज्यमाना मूको. २ २. युष्मदीयबलं हविर्लक्षणेन धनेन युक्त (युजा भ कु) मूको ३. धर्षणाय कु रवि ४ अभिभवाय रवि ५ भिन्नं रवि ६ नाभिभवाय भ कु ७ तविष्या कु ८ मातिर भ ९ मु भ १०. प्राप्नुथेत्यर्थः मूको ११ ज्ञायते भ[illegible] वि[illegible] १२. शत्रूणामाधर्षणाय वि[illegible]

स्कन्द० प्र वेपयन्ति कम्पयन्ति पर्वतान् मरुतः । वि विञ्चन्ति विविद्[1] पृथग्भावे । पृथक् कुर्वन्ति । उत्खनन्तीत्यर्थः । कान् । वनस्पतीन् । प्रत्यक्षकृतः[2] परोऽर्धर्चो भिन्नं वाक्यं पूर्वस्मादर्धर्चात् । [3]प्रो आरत[3] अर्तिर्गत्यर्थः । प्रागच्छत हे मरुतः ! । कथम् । दुर्मदा इव यथा दुर्मदाः सन्तः प्रकर्षेण हुंकारयन्तः आगच्छन्ति तद्वत् । [4]देवासः ! हे देवाः ! । मा च केवला एव । किं तर्हि । सर्वया विशा 'विश.'[5] (निघ० २,३ ) इति मनुष्यनाम । सर्वया स्वपरिचारकमनुष्यजात्या सह । सर्वैः परिचारकैः सहेत्यर्थः ॥५॥

वेङ्कट० प्र[6] कम्पयन्ति[7] शिलोच्चयान्, पृथक् कुर्वन्ति वनस्पतीन् । इत्थं मधुमत्ता इव प्रगच्छथ[8] देवाः ! मरुतः ! सर्वैः अनुचरैः सह[9] ॥ ५ ॥

मुद्गल० पर्वतान् मेरुहिमवदादीन् प्र वेपयन्ति मरुतः प्रकर्षेण कम्पयन्ति । वनस्पतीन् महाश्वत्थादीन् वि विञ्चन्ति परस्परवियुक्तान् कुर्वन्ति । हे मरुतः ! देवासः ! देवाः ! सर्वया विशा प्रजया सहिता यूयम् प्रो आरत प्रकर्षेणैव[10] सर्वतो गच्छथ । दृष्टान्तः । दुर्मदाः इव [11]यथा मदोन्मत्ताः[11] स्वेच्छया सर्वतः क्रीडन्ति[12] तद्वत् ॥ ५ ॥

इति प्रथमाष्टके तृतीयाध्याये अष्टादशो वर्गः ॥

उपो रथेषु पृषतीरयुग्ध्वं प्रष्टिर्वहति रोहितः ।
आ वो यामाय पृथिवी चिदश्रोदबीभयन्त मानुषाः ॥ ६ ॥

उपो इति । रथेषु । पृषतीः । अयुग्ध्वम् । प्रष्टिः । वहति । रोहितः । आ । वः । यामाय ।
पृथिवी । चित् । अश्रोत् । अबीभयन्त । मानुषाः ॥ ६ ॥

स्कन्द० [13]उपो रथेषु[13] उपो इत्येष निरित्येतस्य स्थाने[14] । आख्यातेन सम्बन्धयितव्यः । स्वरथेषु पृषतीः पृषद्वर्णा वडवा उपो अयुग्ध्वम् इति । अस्मदागमनार्थं [15]रथस्यैकस्य पृषतीः निरयुग्ध्वम्[15] । न च केवलाः । किं तर्हि । प्रष्टिः वहति रोहितः चतुर्वर्गस्य[16] रथस्यैकस्यामेव[17] धुरि यः पार्श्वे द्वितीयो नियुज्यते स प्रष्टिरित्युच्यते । एकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहार्यौ । यः प्रष्टिर्वहति रोहितः लोहितवर्णः तं च । किं पुनः कारणम्, यदेनोहामहे । उच्यते । यस्मात् आ वः यामाय वः इति षष्ठी । यामायेति यामशब्दो रथवचनः । 'विभुर्वो यामः' ( ऋ १,१४,१ ) इति यथा । षष्ठ्यर्थे चतुर्थी । तच्छब्दश्रुतेश्च शब्दमिति वाक्यशेषः । युष्माकं स्वभूतस्य गच्छतो रथस्य शब्दम् । पृथिवी चित् शब्दः पदपूरणः । समस्ता पृथिवी । आ अश्रोत् मर्यादया शृणोति । अतश्च वयमपि शृणुमः[18] इत्यर्थः । अबीभयन्त बिभ्यति[19] युष्मत्तः पापमकुर्वन्तः अस्मद्विधाः मानुषाः । अथवा[20] आ वो यामायेति च इति 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता' ( पा १,४,४० ) इत्येवं संप्रदानत्वात् संप्रदाने चतुर्थी । यान्त्यस्मिन् देवा इति यामो यज्ञः । द्वितीयार्थेऽत्र चतुर्थी । युष्मभ्यं यज्ञं समस्ता पृथिवी आ अश्रोत् आशृणोति प्रतिजानीते । यस्मात्[21] युष्मान् यक्ष्यामीत्येवम् कश्चिदाम्युपगच्छतीत्यर्थः । अतश्चाप्यत्र स्पष्टता

१. विविच्य अ कु. २. °कृतं अ. ३-३. नास्ति अ. ४. हे देवासः अ कु. ५. विट् रवि. ६. नास्ति वि° रुपं. ७. कम्पयन्ति अ° वि°. ८. प्राग° वि° रुपं. ९. नास्ति अ° वि°. १०. °णैव मे°. ११-११. यथोन्मत्ताः वि. १२. क्रीडयन्ति मूको. १३-१३. नास्ति रवि. १४. एतेन रवि. १५-१५. नियुग्ध्वं अ कु; नियुग्ध्वम् रवि. १६. चतुर्वर्गस्य अ कु. १७. °स्यैकस्य एव° रवि अ. १८. शृणुमः मूको. १९. बिभ्यति अ कु २०. नास्ति मूको. २१. नास्ति अ कु.

मरुत कदाचिदस्मयन्त नागच्छेयुरपीत्येवमाशङ्किता युष्मदनागमनात्[१] अबीभयन्त बिभ्यति[२] अस्मद्विधा मानुषा । यस्मादन्यव्यापृताना युष्माकं स्वयत्नेऽनागमनात् बिभेमि तस्मादहं ब्रवीमि—न्ययुग्ध्वं पृषतीर्वहवा प्रष्टिं च रोहितमिति समन्वार्थ[३] ॥ ६ ॥

वेङ्कट० यूयम् रथेषु पृषद्वर्णा अश्वा उपायुङ्ग्ध्वम्[४] । प्रष्टि भूत्वा वहति रोहितवर्ण अश्व च चोपायुङ्ग्ध्वम्[५] । आश्नोति भवताम् गमनाय पृथिवी । किं मरुत आगच्छन्तीति भयन बिभ्यति[६] च मानुषा ॥ ६ ॥

मुद्गल० हे मरुत ! रथेषु भवदीयषु पृषती बिन्दुयुक्ता मृगी उत[७] सामीप्येनैव अयुग्ध्वं योजितवन्त । प्रष्टि एतत्संज्ञको वाहनत्रयमध्यवर्ती युग्यविशेष रोहित मृगाणामन्यतमजाति लोहितवर्ण[८] वहति रथ नयति । य युष्माकम् यामाय गमनाय पृथिवी चित् अन्तरिक्षमपि आ अशोत् आभिमुख्येन अशृणोत् । अशृणुतानालीत्यर्थ । मानुषा भूलोकवर्तिन पुरुषा अबीभयन्त स्वयं भीता सन्त अन्येषामपि भीतिमुत्पादितवन्त ॥ ६ ॥

आ नो॑ म॒क्षू तना॑य॒ कं रुद्रा॒ अवो॑ वृणीमहे ।
गन्ता॒ नूनं॒ नोऽव॑सा॒ यथा॑ पु॒रेत्था कण्वा॑य बि॒भ्युषे॑ ॥ ७ ॥

आ । नु । म॒क्षु । तना॑य । कम् । रुद्रा॑ । अवः॑ । वृ॒णी॒म॒हे॒ । गन्त॑ । नू॒नम् । नः॒ । अव॑सा । यथा॑ । पु॒रा । इ॒त्था । कण्वा॑य । बि॒भ्युषे॑ ॥ ७ ॥

स्कन्द० न युष्माकम् स्वभूतम् मक्षु क्षिप्रम्[९] इत्यर्थ । तनाय तनोत्यसाविति तन[१०] पुत्रादिसन्तान, तदर्थम् । अथवा 'तना' (निघ २,१०) इति धननाम । धनार्थम् । कम् सुखं हे रुद्रा । रुद्रपुत्रा ! मरुत ! अव पालनम् आ वृणीमहे प्रार्थयामहे । युष्माभि पाल्यमाना पुत्रादिसन्तान धन वा प्राप्स्याम इत्येवमर्थं युष्मदीय पालनं क्षिप्रं प्रार्थयामहे इत्यर्थ । अत एतत् पालनाय गच्छत[११] । नूनम् इति पदपूरण । न 'गत्यर्थकर्मणि द्वितीया' (पा २ ३,१२) इत्येवमेषा कर्मणि चतुर्थी । एकवचनस्य स्थाने बहुवचनम् । अस्मान् । अवसा 'इत्थंभूतलक्षणे' (पा २,३,२१) इत्येवमेषा तृतीया । पालनेन सम्बद्धा । यथा पुरा[१२] पूर्वेषु कालेषु[१३]इत्था इत्यम्[१३] अस्मत्तोऽन्तरिक्षात् कण्वाय बिभ्युषे [१४]आशङ्कितयुष्मदनागमनभीताय[१४] । [१५]यथैव पुरा तद्वदिदानीमपि पालनदाता मा [†]कण्वमाशङ्कित युष्मदागमनभीत[†][१६] अस्मद्गुणोऽन्तरिक्षादागच्छतेत्यर्थ ॥ ७ ॥

वेङ्कट० आ वृणीमहे युष्माकम् रुद्रपुत्रा ! रक्षणम् [१७]पुत्राय । यथा रातिं गच्छत[१७] सम्प्रति अस्मान्[१८] रक्षणेन । यथा पुरा अस्मिन्नामाह्वाने,[१८] अस्मान्[१९] बिभ्युषे कण्वाय गच्छतेति ॥ ७ ॥

---

१ युष्मदाग° अ कु २ बिभ्यन्ति कु ३ मनस्या स्तु अ त्रथा कु, समरणार्था स्तु अ ४ उपायुग्ध्वं वि' न्य; °युङ्ध्वम् कु इति ५ °युङ्ध्वम् कु इति[१०], °युग्ध्वम् इति ६ °भ्यन्ति कु, °भ्यनीति वि' अ' ७ नास्ति वि ८ °प ख्येम् मूको ९ क्षिप्रं प्रार्थयामहे इत्यर्थ मूको १० तन तानन अ ११ गच्छत इति १२ नास्ति अ कु १३-१३ सत्यम् अ कु, इत्था इति [illegible] °द्धि युष्मदागमनभीतम् अ कु १४-१४ त्रुटितम् अ † पाल्यस्ता इति †-† °द्धि युष्मदागमनभीतम् अ कु १५ १५ धनार्थं वा सन्तानार्थ वा सुखार्थं वा यथा गच्छत वि' अ' १७ अस्मान् वि'[१८] कु, न अस्मान् वि' अ' १८ °हने कु, ह्वाने कौन वि' अ' १९ नास्ति वि'.

मुद्गल० हे रुद्राः ! रुद्रपुत्राः[1] मरुतः ! तत्तादृशम् अस्मदीयपुत्रार्थम् युष्मदीयम् अव रक्षणम् आ वृणीमहे सर्वतः प्रार्थयामहे । पुरा पूर्वस्मिन् काले कर्मान्तरेषु न अवसा अस्मदीयरक्षणेन निमित्तेन यूयं यथा प्रावत, इत्था अनेन प्रकारेण विश्वप्से भीतियुक्ताय कण्वाय मेधाविने यजमानाय तदनुग्रहार्थम् नूनम् क्षिप्रम् आ गन्त आगच्छत ॥ ७ ॥

युष्मेषितो मरुतो मर्त्येषित आ यो नो अभ्व ईषते ।
वि तं युयोत शवसा व्योजसा वि युष्माकाभिरूतिभिः ॥ ८ ॥

युष्माऽइषितः । मरुतः । मर्त्यऽइषितः । आ । यः । नः । अभ्वः । ईषते । वि । तम् । युयोत । शवसा । वि । ओजसा । वि । युष्माकाभिः । ऊतिऽभिः ॥ ८ ॥

स्कन्द० हे मरुतः ! 'युष्मेषितः मर्त्येषितः'[1] युष्माभिरेषितो मर्त्यप्रेषितो वा आ[2] यः नः अभ्वः महत्-नामैतत् (तु निघ ३,३)। महान् आ ईषते 'ईषति एजति' इति गतिकर्मसु पाठात् गत्यर्थोऽयम् (तु निघ २,१४)। आगच्छति । कः । सामर्थ्यात् हिंसिता । 'वि तम् युयोत' यौति पृथग्भावार्थः पृथक् कुरुत । तमस्मत्तोऽपनयतेत्यर्थः । केन । शवसा सेनालक्षणेन । वि तम् ओजसा[3] युयोत । वि युष्माकाभिः ऊतिभिः यौष्माकीणैः[4] पालनैश्च वियुयोत । किञ्चित् सेनालक्षणेन बलेन, किञ्चित् स्वशरीरबलेन, किञ्चित् पालनमात्रेणैवेत्यर्थः ॥ ८ ॥

वेङ्कट० युष्माभिः प्रेरितः मरुतः ! मर्त्यैर्वा प्रेरितः यः महान् अस्मान् 'आ हिनस्ति, तम् यूयं शवसा अस्मत्तः पृथक् कुरुत, ओजसा च । तथा यौष्माकीणैः परिरक्षणैश्च अस्मात्[5] अवतेति ॥ ८ ॥

मुद्गल० हे मरुतः ! यः यः कश्चित् अभ्वः शत्रुः युष्मेषितः युष्माभिः प्रेषितः मर्त्येषितः मानवैः मर्त्यैर्वा प्रेषितः सन् नः अस्मान् प्रति आ ईषते आभिमुख्येन प्राप्नोति, तम् शत्रुम् शवसा बलेन वि युयोत विभक्तं कुरुत । तथा ओजसा बलेन वि युयोत, युष्माकाभिः ऊतिभिः युष्मत्सम्बन्धिभिः रक्षणैश्च वि युयोत ॥ ८ ॥

असामि हि प्रयज्यवः कण्वं दद प्रचेतसः ।
असामिभिर्मरुत आ न ऊतिभिर्गन्ता वृष्टिं न विद्युतः ॥ ९ ॥

असामि । हि । प्रऽयज्यवः । कण्वम् । दद । प्रऽचेतसः । असामिऽभिः । मरुतः । आ । नः । ऊतिऽभिः । गन्त । वृष्टिम् । न । विऽद्युतः ॥ ९ ॥

स्कन्द० सामि अर्धम् । न सामि असामि समग्रम् । किं तत् । सामर्थ्यात् धनम् । प्रयज्यवः ! प्रकर्षेण यष्टव्या मरुतः[1] । कण्वम् चतुर्थ्यर्थे द्वितीयैषा । मह्यं कण्वाय । दद दत्त । हे प्रचेतसः[1] प्रकृष्टज्ञानाः ! । किञ्च असामिभिः समग्राभिः हे मरुतः ! नः अस्मान् ऊतिभिः पालनैः सम्पदा आ गन्त आगच्छत । समग्रपालनहेतोः अस्मान् प्रत्यागच्छतेत्यर्थः । कथम् । वृष्टिम् न विद्युतः यथा वृष्टिं मरुतो[7] व्याप्नुवत्यो[8] विद्युत आगच्छन्ति, तद्वत् ॥ ९ ॥

१ १ नास्ति भ कु २ नास्ति रवि ३ ३ न वियुयोत रवि ४ नास्ति भ कु ५ 'भ्राने म ६-६ नास्ति भ[1] वि[1] † 'भैने कु ७ महता रवि ८ व्याप्नुवन्ती भ कु

